Book No. 1. पुस्तकांकः-१.

॥ श्रीहस्तिशैलशिखरोज्ज्वलपारिजाताय नमः ॥

श्रीमद्विशिष्टाद्वैतसिद्धान्तप्रवर्तनधुरंधर–कवितार्किकसिंह
सर्वतन्त्रस्वतन्त्र श्रीमद्वेदान्ताचार्य विरचित

सकलग्रन्थबृन्द प्रकाशनी, मासिकी

# ॥ श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

पर्यवेक्षकः परिष्कारकश्च
श्रीकाञ्चीप्रतिवादिभयङ्करमठाधीश

जगद्गुरु-श्रीकृष्णमाचार्यस्वामी, तथा

श्रीकाञ्ची. वेदवेदान्तवैजयन्ती विद्यालयाध्यक्षः

प्रतिवादिभयङ्कर-अण्णङ्गराचार्यः ।

# Srimath Vedantadesika Granthamala

GENERAL EDITOR

SRI KANCHI. P. B. ANNANGARACHARYAR.

प्रकाशनादि सर्वाधिकारी
विद्वान्. ति, अ. संपत्कुमाराचार्यः एम् ए., कञ्जीवरम्.
प्राप्तिस्थानम्–ग्रन्थमालाआफिस्, ३९. सन्निधिवीधी कञ्जीवरम्

Address:—
Granthamala Office. 39, Sannidhi Street,
CONJEEVERAM. [S. I. Ry.]

1940 JULY and AUGUST.

एतन्मूल्यं रूप्यकत्रयम् ।

श्रीरस्तु

श्रीमद्वेदान्तदेशिकग्रन्थमालायां

[वेदान्तविभागे प्रथमसम्पुटम्]

# ॥ अधिकरणसारावली शतदूषणी च ॥

परिष्कारकः पर्यवेक्षकश्च

## ॥ श्रीकाञ्ची प्रतिवादिभयङ्करः अण्णंगराचार्यः ॥

प्रकाशनादि सर्वाधिकारी :

विद्वान् अ. संपत्कुमाराचार्यः, M. A.

२९, सौथ माडवीथी, कञ्जीवरम् ।

[इदमेव पुस्तकप्राप्तिस्थानम्]

मदरास्—लिबर्टी मुद्रणालये समुद्यत ।

1940

एतन्मूल्यं प्रापणव्ययसहितं

Price : 3—0—0] ॥ रूप्यत्रयमात्रम् ॥ [With Postage

॥ श्रीरस्तु ॥

श्रीमते रामानुजाय नमः ।

श्रीमन्निगमान्तमहादेशिकाय नमः ।

# श्रीमद्वेदान्तदेशिकग्रन्थमालायाम्

## ॥ वेदान्तविभागः ॥

# ॥ अधिकरणसारावली ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

( शास्त्रावतारः )–

स्वस्ति श्रीरङ्गभर्तुः किमपि दधदहं शासनं तत्प्रसत्त्यै सत्यैकालम्बि भाष्यं यतिपतिकथितं शश्वदध्याप्य युक्तान् ।
विश्वस्मिन्नामरूपाण्यनुविहितवता तेन देवेन दत्तां वेदान्ताचार्यसंज्ञामवहितबहुवित्सार्थमन्वर्थयामि ॥१॥

श्रीमद्भ्यां स्यादसावित्यनुपधि वरदाचार्यरामानुजाभ्यां सम्यग्दृष्टेन सर्वंसहनिशितधिया वेङ्कटेशेन क्लृप्तः ।
सेव्योऽसौ शान्तचित्तैः श्रवणरसनया शान्तिलाभार्थिभिर्वा सिद्धश्शारीरकार्थे सहजबहुगुणः स्रग्धरादुग्धराशिः ॥२॥

त्रय्यन्तस्वान्त (वे)वादिन्यधिकरणगणे पौनरुक्त्योक्तबाधौ मन्दत्वासङ्गतत्वे विशयमफलतां मानबाधं च मन्तॄन् ।
दिङ्मोहक्षोभदीनान् दिनकरकिरणश्रेणिकेवोज्जिहाना हृद्या पद्यावलीयं हृदयमधिगता सावधानान्धिनोतु ॥३॥

गम्भीरे ब्रह्मभागे गणयितुमखिलं कः प्रवीणः प्रमेयं ! दिङ्मात्रं दर्शयन्नप्यहमिह निपुणैः प्राध्वमध्यक्षणीयः ।
मा भून्निश्शेषसिद्धिस्तदपि गुणविदः स्फीतनिस्सीमरत्ने मध्येहारं निधेयं महति जहति किं मौक्तिकं लब्धमब्धौ?॥

वेदार्थे न्यायचिन्त्ये प्रथममधिगतः कर्मवर्गः प्रमाणैः भेदैरङ्गैः प्रयुक्त्या क्रमविरचनयाऽथाधिकृत्याऽतिदिष्ट्या ।
तत्राशेषैर्विशेषैस्तदनु तदनुवर्त्यूहतः प्राप्तबाधैः तन्त्रेणाथ प्रसक्त्या तत उपरि चतुर्लक्षणी देवतार्था ॥५॥

प्राग्धर्मेऽल्पास्थिरार्थे प्रशमितविशये तादृशाराध्ययुक्तेऽथातश्शारीरकांशे बहुविधमहिम ब्रह्म मीमांसितव्यम् ।
कृत्स्नस्वाध्यायसाङ्गाध्ययनसमुदितापातबुद्ध्यैव कर्म त्यक्त्वाऽऽदौ ब्रह्मचिन्तां किमिति नकुरुतां तन्न तुल्योक्त्यबाधात् ॥

प्रावण्यं प्राक्तिवर्गे सफलयतनतोपासनाङ्गत्वतोऽपि व्याख्यारूपेऽत्र शास्त्रे क्रमनियतिरतः स्याच्च मुख्यक्रमेण ।
मानत्वादिर्विचार्यः पुरत इह तथा वाक्यवेद्यात्पदार्थो दृष्टान्तश्चोपमेयाद्यदि मधु सविधे यातु चाद्रिं किमर्थ(म)ः ॥

व्याचख्युः केऽपि तापत्रयहतिमितरे साधनानां चतुष्कं काण्डेऽस्मिन् पूर्ववृत्तं कथयति निगमः कर्मचिन्ताफलं तत् ।
साङ्गाधीतिर्हि सूते विशयमवसरः क्वात्र तन्त्रान्तरादेरौचित्यस्थापिताऽयं क्रम इह न पुनश्चोदनासंप्रयुक्तः ॥८॥

नित्यप्राप्तस्य कण्ठस्थितकनकनयान्निर्विशेषस्य लब्धिर्मिथ्याभूतं निवर्त्यं श्रुतिशकलभुवः प्रेक्षणात्तन्निवृत्तिः ।
कर्मैवं क्वोपयुक्तं प्रतिभटमपि तद्वृत्तनोक्तिर्मदुक्ते प्राप्ताऽत्रेति प्रलापे प्रतिवचनगतिर्भाषिता विस्तरेण ॥९॥

मीमांसायाः कबन्धं कतिचन जगृहू राहुकल्पं शिरोऽन्ये किंतैरन्तर्विरोधप्रमुषितमतिभिर्बाह्यकल्पैर्भ्रमद्भिः ।
स्वाध्यायाध्यायकार्त्स्न्ये स्वविधिपरविधिप्रेरणा नावदाम्नां कृत्स्नापातप्रतीतौ किमिति कृतधियः कृत्स्नचिन्तां नकुर्युः?॥

प्राधीतस्यैकरूपप्रयतननियतादेकरूपोपकाराद्विद्यास्थानैक्यसिद्धौ क्रमनियतियुताकाङ्क्ष्यैकप्रबन्ध्यम् ।
अध्यायादिष्विवावान्तरविषयफलाद्यन्यताऽत्राप्यभेत्त्री तत्तुल्यः कर्तृभेदः कलिबलकलुषैः कल्पितोऽर्थे विरोधः ॥११॥

तत्तद्वैशिष्ट्यभेदाद्यदगणि भिदुरा देवता पूर्वभागे संज्ञावैषम्यमात्रादपि कथमियताऽधीतयष्टव्यभङ्गः? ।
उद्देश्याकारभेदोऽस्त्ययमिति हविषामुक्तिभिन्ने प्रयोगे दौर्बल्यं त्वक्षवेद्यान्मितिचरमतया द्रव्यतो देवतायाः ॥१२॥

जैमिन्युक्तं विरुद्धं यदिह बहुविधं दर्शितं सूत्रकारैस्तस्मादत्रैकशास्त्र्यं हठकृतमिति न ब्रह्मसंवाददार्ढ्यात् ।
तन्नस्तात्पर्यभेदैर्विहतिपरिहृतिः काण्डवत्काण्डयोस्स्यात् बाह्याक्षेपार्थगूढाशयवचनभवभ्रान्तिशान्त्यादिसिद्धेः ॥१३॥

आक्षिप्य स्थापनीयाः कतिचिदिह नयाः पूर्वकाण्डप्रणीताः केचिद्व्युत्पादनीयाः क्वचिदपवदनं व्याप्यमौत्सर्गिकस्य ।
इत्थं सर्वत्र चिन्ताक्रम इति समनां वीक्ष्य मध्यस्थदृष्ट्या शास्त्रैक्ये पौनरुक्त्यप्रभृतिपरिहृतिस्सावधानैर्विभाव्या ॥

वृत्तिग्रन्थे तु जैमिन्युपरचिततया षोडशाध्याय्युपात्ता सङ्कर्षः काशकृत्स्नप्रभव इति कथं तत्त्वरत्नाकरोक्तिः ।
अत्र ब्रूमस्सदुक्तौ न वयमिह मुधा बाधितुं किञ्चिदर्हाः निर्वाहस्तूपचारान् क्वचिदिति घटते ह्येकतात्पर्ययोगः ॥१५॥

सौत्री सङ्ख्या शुभाशोरधिकृतिगणना चिन्मयो ब्रह्मकाण्डे तादर्थ्येऽनन्तरत्वेऽप्यधिकरणभिदा नाल्पसारैः प्रकल्प्या ।
अक्षोर्म्याशाहिकाष्ठाद्विरदमुनिवसूर्म्यद्रितत्त्वातिशक्वर्यक्षैरक्षैः प्रयानैरिह भवति रमैः पादनीतिप्रबन्धः ॥१६॥

शास्त्रं त्वेतत्समन्वित्यविहतिकरणप्राप्तिचिन्ताप्रधानैःअध्यायैष्षोडशाङ्घ्रिद्विकयुगभिदुरं षट्कभेदादिनीत्या ।
तत्राद्यं वक्ति सिद्धं विषयमपि परं तत्प्रतिद्वन्द्वियुग्मं स्वप्राप्तेस्साधनं च स्वयमिति हि परं ब्रह्म तत्रापि चिन्त्यम् ॥१७॥

तत्राद्येऽत्यन्तगूढाविशदविशदसुस्पष्टजीवादिवाचः पश्चात्स्मृत्यादिकैरक्षतिरहितहतिः कार्यताभ्रेन्द्रियादेः ।
दोषादोषौ तृतीये भवभृदितरयोर्भक्तिरङ्गानि चाथोपासारोहप्रभावोत्क्रमसरणिफलान्यन्तिमे चिन्तितानि ॥१८॥

स्रष्टा देही स्वनिष्ठो निरवधिमहिमापास्तबाधश्रिताप्तः स्वात्मादेरिन्द्रियादेरुचितजननकृत्संसृतौ तन्त्रवाही ।
निर्दोषत्वादिरम्यो बहुभजनपदं स्वार्हकर्मप्रसाद्यः पापच्छिद्ब्रह्मनाडीगतिकृदतिवहन् साम्यदश्चात्र वेद्यः ॥१९॥

विध्युक्त्याऽधीत्य वेदान्विधिबलविरतावन्यजादेव रागात् कृत्स्नं मीमांसमानाः क्रमत इति परब्रह्मचिन्तां तरन्ति ।
प्राप्ते तुर्ये युगेऽस्मिन् परिमितबलधीप्राणतद्विघ्नदृष्ट्या कालक्षेपाक्षमत्वात् कतिचन कृतिनश्शीघ्रमन्ते रमन्ते ॥२०॥

रागान्मीमांसते चेत् स्वयमिह यततां किं गुरूक्त्येति चेन्न ब्रह्म ज्ञानाप्तये गुर्वभिगमनविधेस्तेन तत्त्वोपदेशात् ।
सद्विद्याचार्यवत्त्वे प्रथयति च परब्रह्मवित्तिं तथान्याप्याचार्यादित्यधीते नियमविधिरसौ निश्चितो नोतिविद्भिः ॥२१॥

सिद्धे व्युत्पत्तिराद्या न भवति न च धीर्लक्षणाद्युज्यतेऽस्मिन् किं शास्त्रेणान्यसिद्धे न च निशमयितुस्सिद्धबोधे फलं स्यात् ।
ब्रह्मण्येवं न मानान्युपनिषद इति स्तम्भिते तद्विचारे शास्त्रारम्भं चतुस्सूत्र्यघटयदुचितैर्न्यायभेदैश्चतुर्भिः ॥२२॥

सिद्धे व्युत्पत्त्यभावे स्वरिव फलतया लक्ष्मभङ्गे च लभ्यं ब्रह्मान्योक्त्याऽनुमानप्रमितमपि भवत्वंशनश्शास्त्रवेद्यम् ।
विध्यर्थत्वेऽप्यबाधात्परविषयवचस्स्वार्थमानं भवेदित्यन्वारुह्योक्तिर्दैन्यं न हि महत ऋजुम्मृत्रकृद्धावदूकः ॥२३॥

द्वाभ्यामादौ प्रतीतिप्रजननमुदितं सिद्धरूपे परस्मिन् द्वाभ्यां वैफल्यशङ्का तदनु परिहृता शास्त्रतज्जन्यबुद्ध्योः ।
औचित्यानेकभाष्यस्वरसगतिमती प्राक्तनी वर्तनीयं शास्त्रारम्भार्थमेकं त्रितयमपि परं शास्त्रमित्याहुरेके ॥२४॥

यत्तत्मेनेश्वरार्यैरगणि वकुलभृत्किङ्करै रङ्गचक्रकारि व्यामार्यैर्न्यामि च द्विरश्रुतमिति विशदं विष्णुचित्तैर्विवव्रे ।
अश्रौषं शेषकल्पादहमपि विदुषो वादिहंसाम्बुवाहात् अद्धा निर्द्धार्यतेऽतश्चतुरधिकरणी ब्रह्मचिन्तोद्यमार्था ॥२५॥

व्युत्क्रम्यात्राद्यतुर्यावभिदधति नयौ केचिदप्राप्तमेनत् बोधासिद्धौ कथ तत्फलमिह विमृशेत् सिद्धवत्कारमान्द्यात् ।
मध्यौ द्वौ रूपनामप्रजननविषयौ यद्विदुस्तच्च मन्दं सत्युक्तेऽपेक्षितेऽर्थे विफलविभजनं नोचितं नीतिमूत्रे ॥२६॥

इति शास्त्रावतारः ॥

---

–( अथ जिज्ञासाधिकरणम् ॥ १ ॥ )– सू० अथातो ब्रह्मजिज्ञासा । १.१.१.

कार्ये व्युत्पत्तिराद्या नियतमिति गिरस्तत्परा एव सर्वा नान्या वेदेऽपि नीतिस्तत उपनिषदामूषरप्रायतैव ।
नातस्तद्वेद्यमीमांसनमुचितमिति प्रत्यवस्थीयमाने सिद्धे व्युत्पत्तिमाद्यां बहुमुखमवयन् ब्रह्म जिज्ञास्यमाह ॥२७॥

अङ्गुल्या निर्दिशन्तः किमपिकिमपि तद्वाचकांशैः प्रयुक्तैः बालान् व्युत्पादयन्ति क्रमभवमिलितज्ञापकत्वं विदन्तः ।
सङ्गतास्ते पदानां विदधति च धियं क्वापि सिद्धे विशिष्टे कर्तव्ये क्वापि चेति क्वचिदिह नियतिश्शब्दशक्तेर्न कल्प्या ॥

संसारेऽनादिसिद्धे मुहुरनुभवतस्सञ्चितास्संस्क्रियास्स्युस्संस्कारोद्बोधकाश्च स्वयमुपनिपतन्त्यप्रकम्प्यात्प्रवाहात् ।
तत्तज्जातीयभेदग्रहणममुचिता वृत्तयस्तन्निदानाः तद्वत्स्याच्छिक्षकादिव्यवहृतिषु शिशोरेदमर्थ्यादिबोधः ॥२९॥

दक्षैराधोरणाद्यैरनुमितविविधस्वप्रयासोपयोगैः शिक्षाभेदा विचित्रा गजविहगमुखान् ग्राहयद्भिः प्रयुक्ताः ।
तस्मात्सार्थो मनुष्यप्रभृतिषु च तथाभूतशिक्षाविशेषः कल्पो भाष्योदितोऽयं न यदि कथमसौ कल्पनेऽन्योऽपि मार्गः ॥

कस्मैचित्सिद्धमर्थं कमपि कथयितुं चेष्टया चोद्यमानः तस्मै तं वक्ति तद्धीममविषयतया शिक्षते तद्वचोऽन्यः ।
आदिष्टो बोधनार्थं यदिह वितनुते तत्तदर्थं हि युक्तं तद्वाक्यात्सिद्धवेदी प्रयतत इति चेदस्त्वनादेशिकं तत् ॥

पुत्रस्तेऽभून्न सर्पोऽयमिति वचनतः प्रीत्यभीत्यादिलिङ्गैः तद्योग्यार्थं तदूह्यं विषयनियतिरासक्तिपूर्वैः क्वचित्स्यात् ।
आवापोद्वापभेदात् प्रतिपदनियता शक्तिरप्यत्र सिद्ध्येत् भूयोदृष्ट्यादिसाहायकमिह वचसः कार्यपक्षाविशिष्टम् ॥

कार्ये व्युत्पत्तिराद्या भवतु तदपि किं शक्तितात्पर्यसिद्धेः प्राग्व्युत्पत्तिः क्रियायां नृवचसि निगमे त्वन्यथेत्यभ्युपैषि ।
स्थाप्याऽतोऽनन्यथासिध्द्यनुगमनियतैस्सत्प्रयोगैर्हि शक्तिः कोऽसौ पाञ्चाल इत्याद्युचितविरतिकं सिद्धमात्रेऽपि वाक्यम् ॥

दुःखासंभिन्नदेशप्रभृतिफलतया चोदनास्वेव सिद्धं श्रौतत्वादार्थवादिक्यपि भवति फलं रात्रिसत्रे प्रतिष्ठा ।
अङ्गीकुर्मो निषेधानुगुणमिति तथाऽनर्थकृत्त्वं निषेद्ध्ये विद्ध्यर्थैरप्यतस्स्यादवितथविषया ब्रह्मधीरर्थवादैः ॥३४॥

–( इति जिज्ञासाधिकरणम् ॥ १ ॥)–

—( अथ जन्माद्यधिकरणम् ॥ २ ॥ )—सू० जन्माद्यस्य यतः ॥ १.१.२.

जन्माद्यैश्चेद्विशेष्यं भवति बहुलताऽथोपलक्ष्यं ब्रवोपि ज्ञाताज्ञातादिदौःस्थ्यं व्यतिषजति न चालक्षिते स्यात्परीक्षा ।
उद्दिष्टब्रह्मचिन्ता तत इह कथमित्यत्र हेतुत्वलक्ष्यः पुंसूक्तादिप्रसिद्धो गुणनिधिरघजिद्ब्रह्मशब्दार्थ उक्तः ॥३५॥

नाना चेल्लक्षणानि स्वरसभिदुरता ब्रह्मणि स्याद्विशेष्ये खण्डो मुण्डश्च गौरित्यभिलपनसमा धर्मिशब्दैकताऽत्र ।
तेष्वेकं चेद्यथाऽन्यत्समुदितमफलं स्याद्द्व्यवच्छेद्यहानेः खण्डत्वादिक्रमाच्चेत्यमदविहतितः खण्डतादेर्विशेषात ॥ ३६॥

तत्तत्स्वप्रत्यनीकव्युदसननियतं भेदकं नान्यबाधि व्याघातः कालभेदान्न भवति जननस्थापनध्वंसनानाम् ।
प्रत्येकं लक्षणत्वं सुवचमिह बृहदाहतिर्धीमहिम्ने संभूयाप्याहुरेके फलमपि च तदाशङ्कितार्थव्युदासः ॥३७॥

ज्ञातं चेन्नोपलक्ष्यंनच यदि नतरां लक्ष्मयोगाप्रतीतेः ज्ञाताज्ञातांशभेदस्त्विह दुरभिलपो लक्षणेनैव वेद्ये।
ब्रैह्मत्वं ब्रह्मशब्दान्वितिरपि विदिते त्वत्र नोचेन्न शङ्का मेवं नानागमोद्यद्विशयशमनतः श्रीमति ब्रह्मतोक्तेः॥ ३८॥

यावल्लक्ष्यावबोधं यदवगतिरतो लक्षणात्तद्विशेष्यं यस्याबोधेऽपि पश्चाद्यदवगतिरिदं स्यात्तु ते नोपलक्ष्यम् ।
तस्माद्द्वेधाऽपि भाष्येऽनुमतिरनुचितेत्याशयाज्ञस्य चोद्यं मोक्षार्थोपास्यभेदे ह्युभयमपि समन्वेति विद्याविकल्पात्॥३९॥

चन्द्रे शाखेव शान्ते महसि तटगतं लक्षणं कारणत्वं सत्यज्ञानादिवाक्यैरपमृदितगुणं तद्विभातीति डिम्भाः ।
एकत्रार्थो विशेष्ये प्रतिपदनियतावर्ज्यनत्तन्निमित्तद्वारावृत्तिं पदानामिह विदुररुणाद्युक्तिवन्न्यायवृद्धाः ॥४०॥

—( अथ शास्त्रयोन्यधिकरणम ॥ ३ ॥ )— सू० शास्त्रयोनित्वात् ॥ १.१.३.

वीतावीतप्रयोगक्रमनियतिमती कार्यता विश्वमेतत् सर्वज्ञेन प्रकृप्तं गमयति विफलस्त्वत्र शास्त्रैर्विचारः ।
इत्युन्नीतौ लघुत्वादनुमितिवशतः कर्मजैश्वर्ययुक्तो विश्वामित्रादिनोत्या स्फुरति विभुमिहासूत्रयच्छास्त्रवेद्यम् ॥ ४१॥

क्षित्याद्यं कार्यताद्यैः कटकमकुटवत् कर्तृपूर्वं स कर्ता सिद्ध्येद्दलाणवदृष्टप्रभृतिजनकदृक् सर्वशक्तिश्च सैवम् ।
श्रोत्राद्यैस्सौरभादिग्रहणरुचिरियं तादृशव्याप्त्यभावात् सर्वं हेतुं न पश्येत् घटकृदिह न चाकर्तृता तावताऽस्य॥४२॥

कार्यत्वात् स्याद्विवादास्पदमिदमखिलं सर्ववित्कर्तृपूर्वं यन्नैवं तद्धि नैवं पुरुषवदिति नानन्यथासिद्ध्यभावात् ।
हेतावेनादृशात्मन्यविदुरभिदुरं व्याप्त्यसिद्ध्यादिदौःस्थ्यं तद्भङ्गे लक्षणानामगणि गमनिका तत्त्वमुक्ताकलापे ॥४३॥

यद्यप्यात्मान्तरादेरनुमितिरनघा लिङ्गभेदैस्तथाऽपि प्रत्यक्षव्याप्तिशैली न खलु शिथिलिता कुत्रचित्पक्षभेदे ।
आम्नाये त्वद्भुतोक्तिर्न भवति वितथा तादृशाप्तोक्तनीत्या बाधाभावादिसाम्याद्विहतिमति भवेल्लोकवद्द्गौणतादिः ॥

नन्वाम्नायप्रधानाः क्वचिदनुकथयन्त्यस्मदादेरशक्यैः कार्यैः कर्ताऽनुमेयः पर इति तदभिप्रैतु जन्मादिवाक्यम् ।
तस्मादीशानुमानत्यजनमनुचितं वैदिकस्येति चेन्न क्वाप्यौचित्योपदेशाद्यत इति च सदायुक्तिसिद्धानुवादात् ॥४५॥

—( अथ समन्वयाधिकरणम् ॥ ४ ॥ )— सू० तत्तु समन्वयात॥१.१.४.

कर्तव्ये ह्यर्थ उक्ते निशमयितृफलं सिद्धरूपे तु न स्यात् प्रीत्या साफल्यकॢप्तौ वितथमपि वचः किन्न दृष्टं तदर्थम ।
विद्यार्थत्वेऽन्यदृष्टेर्विषयवदनृतं तत् परोक्ष्यं न भावीत्याक्षेपेऽनन्यशेषं निरवधिकसुखे शास्त्रतात्पर्यमाह ॥४६॥

तात्पर्यं ब्रह्मतत्वेऽप्यविहतविधिनाऽप्येकवाक्यत्वपक्षे भेदेऽपि स्यादसिद्धेर्न भवति बलिभुग्दन्तसङ्ख्योक्तिसाम्यम् ।
स्वादार्थत्वं मृषात्वक्षममिति न मृषेत्यूहने प्रीत्ययोगाद्बालोपच्छन्दनादिष्वपि विषयतथाभावबुद्ध्यैव हर्षः ॥४७॥

यत्प्रीत्यर्थं वचस्तन्निखिलमनृतमित्यर्भकप्रायवाक्यं मत्योक्त्यानन्ददृष्टेर्न च विहतिरिहाध्यक्षतश्शास्त्रतो वा ।
तेनानन्यार्थसिद्धोक्त्यनृतविषयताशङ्कनस्तम्भनेन त्रय्यन्तास्सत्यनित्याद्भुतपरमपरब्रह्मनिष्ठाः प्रमाणम् ॥४८॥

ब्रह्मैके निष्प्रपञ्चीकरणविधिपदं ध्यानविध्यर्थमन्ये निर्धर्माद्वैतवाक्योपचरितमितरे मिध्यतीति ब्रुवन्ति ।
तेषामेषां स्वपक्षस्ववचनविहतिव्याकुलानेकजल्पः कल्पोऽयं बाह्यकल्पः कृतमनिपरिषत्पीठमर्दैरमर्दि ॥४९॥

अन्यार्थो ह्यर्थवादस्तुतिमुखमुखतः स्थापितः प्रागिदानीं स्वानन्त्र्येण प्रमाणीक्रियत इति ततः काण्डयोस्स्याद्विरोधः ।
न स्यात्सामान्यतो हि प्रथममभिदधे मानतास्थापनार्थं केषांचित्स्वार्थतोक्ता स्वत इह सुभगे बोधमात्रात्पुमर्थे ॥५०॥

त्रेधा सर्वत्र वेदे नियतविभजने चोदनाद्यंशभेदैश्चत्वारोऽप्यर्थवादा मुनिभिरभिहिता ब्राह्मणांशस्य शेषाः ।
अत्रातच्छेषतोक्तौ स्मृतिहतिरिति चेद्विद्धि दत्तोत्तरं तन्न सामान्योक्तिर्हि सेयं तत उपरि यथामन्त्रविध्यन्यतोक्तिः ॥

आम्नातैरैहिकार्थैरविगुणसफलैश्शाकुनज्योतिषाद्यैः पारत्रिक्या प्रवृत्त्याऽप्यतिनिपुणधियामागमाश्वासमिद्धौ ।
शब्दे तस्माच्च बोधे सति परविषये दोषबाधव्यपेते मानं तत्र स्वतोऽसौ न कथमितरथा नैगमाध्वापलापः ॥५२॥

शास्त्रारम्भोपपत्त्यै चतुरधिकरणीपेटिकेयं प्रवृत्ता लक्ष्यस्योक्तं विशेषद्वयमिह घटने वक्ष्यमाणोपजीवि ।
सङ्ख्याद्युक्तिवेद्यः पर इति हि वदेत्कारणत्वाधिकारे वक्ष्यत्यस्य द्विलिङ्गाद्यधिकृतिषु पुनस्तादृशानन्दनादीन् ॥५३॥

॥ इति शास्त्रारम्भपेटिका ॥

आत्मन्येवं परस्मिन्न कृत इति मिने विश्वहेतुत्वलक्ष्ये शास्त्रैकस्थापनीये निरुपधिपरमप्रमेययोग्ये प्रसक्ते ।
ईदृक्त्वं स्याद्यथार्हं प्रकृतिपुरुषयोर्नानुमानाद्ययोग्यौ दुःखास्पृष्टौ च नावित्यथ परकथनं दोषवीति क्रमेण ॥५४॥

—( अथेक्षत्यधिकरणम् ॥ ५ ॥ )—सू० इक्षतेर्नाशब्दम् ॥ १.१.५.

गौणेक्षासाहचर्यान्न तु बहुभवनप्रेक्षणं नैव मुख्यं दृष्टान्ताद्यैरिहाभात्यनुमितिरचितस्तादृशाज्जन्म युक्तम् ।
सच्छब्दस्तेन मूलप्रकृतिमविकृतिं व्याहरेदित्ययुक्तं श्रुत्याऽन्येषां निरोधात्त्वदभिमतनिरस्कारिलिङ्गादिभिश्च ॥५५॥

ज्ञाते ह्येकत्रसर्वं विदितमिति भवत्यैक्यसिद्ध्यै प्रतिज्ञा मृत्तत्कार्यादयश्च त्रय इह कथितास्तस्य दृष्टान्तभेदाः ।
तेनाव्यक्तानुमानं कथितमिति वृथोत्कण्ठितं हेत्वनुक्तेस्सारूप्यादेश्च हेतोरुपरि परिहृतेरत्र संभावनोक्तेः ॥५६॥

आदेशात्मस्वशब्दैरनितरशरणैस्त्वं तदैक्योपदेशाज्जीवेन स्वेन माहंकरणमनहमोऽचिद्गणस्य प्रवेशात् ।
एकज्ञानेन सर्वं विदितमिति गिरा सर्वतादात्म्यवाचा शाखाविद्यान्तरादेरपि बहुभविता विश्वविद्विश्वमूर्तिः ॥५७॥

—( अथानन्दमयाधिकरणम् ॥ ६ ॥ )—सू० आनन्दमयोऽभ्यासात् ॥ १.१.१३.

मुख्येक्षा यद्यभीष्टा भवतु तदुचिते सा पुनर्जीवतत्त्वे सद्विद्यायां हि शब्दैस्त्रिभिरुपरि सतस्तस्य जीवैक्यमुक्तम् ।
इत्यूहादुज्जिहानं प्रशमयितुमथ प्रस्तुतो विश्वकर्ता जीवस्याप्यन्तरात्मा निरुपधिकमहानन्दथुस्स्थाप्यतेऽत्र ॥५८॥

दृष्टः पूर्वं विकारे मयडिति चरमेऽप्येवमस्त्वित्ययुक्तं मध्ये तद्भङ्गदृष्टेः प्रचुरमिह वदेत् प्रत्ययोऽन्यस्य बाधात् ।
आनन्दप्राचुरी च प्रकृतपरसुखाल्पत्वलब्धावधित्वात्दुःखाल्पत्वानपेक्षा परदुरितभिदश्शासितुस्तद्विरोधात् ॥ ५९॥

आत्मा तस्यैष एवेत्युदितमनितरात्मत्वमस्यैव वक्तुं शारीरोक्तिश्च तस्मिन्निखिलतनुतया स्यादसङ्कोचवृत्तिः।
ज्ञोध्यत्वं तत्तदर्थानुगुणमिति विभोस्तत्प्रसाद्यत्वमात्रं प्राप्येऽस्मिन्प्राप्तिरूपा परविद उपसंक्रान्तिरानन्दसिन्धौ॥६०॥

निर्देहेऽस्मिन्निरंशे न हि भवति शिरःपक्षपुच्छादि किञ्चित् तस्मात्पुच्छं प्रतिष्ठेत्युदितमिह परं ब्रह्म भातीति चेन्न।
सोढा पुच्छत्वक्लृप्तिर्यदि कथमितरन्नानुमन्येत कल्प्यं ब्रह्मण्यात्मप्रनिष्ठावचनमनितराधारताख्यापनाय॥६१॥

—( अथ अन्तरधिकरणम्॥ ७॥ )— सू० अन्तस्तद्धर्मोपदेशात्॥ १.१.२१.

भूयिष्ठानन्तपुण्योपचयबलसमुद्बुद्धपूर्वोक्तभूम्नां शक्रादिन्यायतस्स्यात् त्रिगुणतनुभृतामीश्वराणां प्रवाहः।
तन्नाकर्मोत्थदिव्याकृतिजनिमहिमा शामिता सर्वपुंसां नित्यश्रीर्ब्रध्नबिम्बे श्रुत इति स य इत्युक्त एवैष एकः॥६२॥

सर्वेभ्यः कल्मषेभ्यो ह्युदित इति वदत्यन्तरादित्यविद्या तस्माच्छेषाभ्यनुज्ञानयत इति विभोः पुण्ययोगोऽस्तु मैवम्।
आम्नातोऽनन्यशास्यस्स्ववशपरफलस्साधुना नैष भूयान् स्यात्पुण्ये लक्ष्मयोगादपि न सुकृतमित्यादिना पाप्मशब्दः॥

प्रख्यातं शुद्धसत्त्वं किमपि तदनघं द्रव्यमव्यक्ततोऽन्यत् तद्रूपं रूपमेशं दिवि कनति तथा शेषशेषाशनादेः।
नित्यं तत्सूरिसेव्यं परतरमजहत्स्वस्वभावस्स देवः पुंसां संसारशान्त्यै विपरिणमयति व्यूहपूर्वैर्विभागैः॥६४॥

देहत्वात् सप्तधातुत्रिमलमघभवं दुःखकृन्नाशयुक्तं मांशत्वादेश्च हेतोरिति यदि तदसद्धर्मिमानेन बाधात्।
बाधश्शास्त्रैकवेद्ये क्वचिदपि न भवेदन्यथाऽतिप्रसङ्गात् यत्तु स्वेच्छावतारेष्वभिनयति तदप्यासुरोपप्लवार्थम्॥६५॥

इत्थं विद्यात्रयेण स्थिरचरचिदचिद्देहिनस्सर्वहेतोरव्यक्ताज्जीवतत्त्वादपि समधिकता यद्यपि स्यात्तथाऽपि।
उत्थानद्वारभेदात् क्रमत इह मृदूपक्रमान् क्रूरनिष्ठान् अध्यायेऽस्मिन्निरुन्धन्नधिकरणगुणैस्तद्गुणानुद्गृणाति॥६६॥

शब्दैस्सद्ब्रह्ममुख्यैश्श्रुतिशिरसि मितं कारणं किञ्चिदेकं सङ्कल्पाभ्यामरूपैरतदनुगुणैश्चिन्तितश्चिद्विशेषः।
भूताकाशादिशङ्काजननसमुचितैर्नामभिः कारणस्थैः क्षिप्त्वा तत्पादशेषे श्रुतिसमुदयनासम्भवोक्त्या भुनक्ति॥६७॥

आकाशप्राणशब्दावनितरगतिकौ रूढिभङ्गेन नेयौ ज्योतिश्शब्दस्तु रूढ्या प्रथयति पुरुषं दिव्यतेजोविशिष्टम्।
प्रख्यातेन्द्रादिशब्दस्तदनु नियमितस्तद्विशिष्टप्रवृत्त्येत्येवं स्यात् पेटिकैषा द्विकयुगलवती शब्दवृत्तिक्रमेण॥६८॥

—( अथ आकाशाधिकरणम्॥ ८॥ )— सू० आकाशस्तल्लिङ्गात्॥ १.१.२३.

अत्राकाशस्त्वशेषप्रभवविलयभूस्साम्नि दृष्टस्स्वनाम्ना निर्दिष्टस्तैत्तिरीयेऽस्त्यनितरजनितस्स्वात्मनस्सम्भवोक्त्या।
मैवं सिद्धानुवादो ह्ययमथ च परप्राप्यतादिर्न तस्मिंस्तत्कर्तात्मा विपश्चिच्छ्रुत इति विहता स्वात्मनस्तत्प्रसूतिः॥

—( अथ प्राणाधिकरणम्॥ ९॥ )— सू० अत एव प्राणः॥ १.१.२४.

प्राणायत्तं हि देहादिकमिह विदितं तेन तत्कारणत्वं श्रुत्युक्तं रूढिशक्त्या सुदृढमिति न तद्व्योमवत् बाधनीयम्।
तन्न प्राणस्य काष्ठादिषु महिमहतेः पूर्ववच्चानुवादात् आकाशोक्तेरिवोक्तं भगवति निखिलप्राणनस्यापि दृष्टेः॥७०॥

नोक्तिं व्याहन्ति लिङ्गं किमपि भवति तु ख्याततत्त्वानुकूलं शब्दश्चानन्यनिष्ठश्श्रुत इति न परो ज्योतिराद्युक्तिवेद्यः।
विश्वोत्पत्त्युक्त्यभावेऽप्यवगतमिह तल्लिङ्गमित्याक्षिपन्तं रुन्धेऽथाधिक्रियाभ्यां तदुचितचिदचिद्वर्गवैशिष्ट्ययुक्त्या॥

–( अथ ज्योतिरधिकरणम् ॥ १० ॥ )– सू० ज्योतिश्चरणाभिधानात्. १.१.२९.

कौक्षेयज्योतिरैक्यं कथितमिह परज्योतिषस्तस्य विश्वोपादानत्वं च विद्यान्तरविदितमतः कारणं वह्निरस्तु ।
मैवं पुंसूक्तवाक्योदितपरपुरुषप्रत्यभिज्ञप्त्यबाधात् गायत्र्युक्तिस्तु साम्यादपि च निगदितास्तस्य भूतादिपादाः ॥७२॥

उत्थानं ज्योतिरादावधिकरणयुगे कारणव्याप्तलिङ्गादित्याभाष्यान्यलिङ्गं स्ववचसि विहितं नेति भाष्यं कथं स्यात् ।
इत्थं विश्वादिलिङ्गं सदिह न तु पराभीष्टलिङ्गं समस्तीत्युत्पश्यन् पूर्वपक्षी व्यवहरति तथा व्याहतिस्तत्र शङ्क्या॥

–( अथ प्रतर्दनाधिकरणम् ॥ ११ ॥ )– सू० प्राणस्तथाऽनुगमात् ॥ १.१.२९.

विद्या प्रातर्दनी सा वदति हिततमोपास्तिकर्मेन्द्रमेव ख्यातप्राणेन्द्रचिह्नान्वितमपि तदसौ विश्वकर्तेति चेन्न।
ब्रह्म त्रेधा ह्युपास्यं बहुविधचिदचित्कञ्चुकं स्वात्मना च प्राणेन्द्रप्रक्रमोऽपि प्रबलतरमहावाक्यवेघट्यभग्नः ॥७४॥

यल्लिङ्गं कारणैकस्थितमिति कथितं ज्योतिषीन्द्रे च तत्तु प्रख्यातान्यैकनिष्ठं प्रथममितमतस्तन्मुखोत्थित्ययोगः ।
अप्राप्ते तद्विमर्शे प्रकृतशिथिलता नेति चेत्सत्यमेतत् विष्णूत्पत्त्युक्तिनीतिक्रमत इह पुरोवादमुत्प्रेक्ष्य शङ्का ॥७५॥

ज्योतिःप्राणेन्द्रशब्दाः परतरविषयाः कारणव्याप्तधर्मादित्येतत्साध्वमीषां बहुविहतिमती ख्यातमात्रे तु वृत्तिः ।
तत्कौक्षेयानलात्मा कथित इह तथा ध्यानतस्तत्फलाप्त्यै मुख्यप्राणादिलिङ्गं तदुपहितपरोपासनान्मोक्षणाय ॥७६॥

कार्यं यत्कर्मवश्यं यदपि दृढमितं तन्निरूढैस्तु शब्दैः निर्दिष्टे ब्रह्मणि स्यात्क्वचिदगतिहता रूढिरैन्द्रीनयेन ।
तल्लिङ्गानन्यथासिद्ध्यधिगमनबलात्तद्विशिष्टे विवक्षा स्यादीशे ज्योतिरिन्द्राद्यभिलपनपदेऽहंत्वमादीरिते च ॥७७॥

स्वेच्छातस्सर्वहेतुश्शुभगुणविभवानन्तनिस्सीमहर्षश्शुद्धाकर्मोत्थनित्याकृतिरनुपधिकाकाशनादिस्वभावः ।
सप्राणाप्राणभेदव्यतिभिदुरजगत्प्राणनो दिव्यदीप्तिः प्राणेन्द्राद्यन्तरात्मा प्रभुरधिकरणैस्सप्तभिः प्रत्यपादि ॥७८॥

इति प्रथमस्याध्यायस्य प्रथमः पादः ॥

–( ॥ अथ प्रथमस्याध्यायस्य द्वितीयः पादः ॥ )–

अत्रायोगान्ययोगव्यपनयननयैर्ब्रह्मपादत्रिपादीभागारूढैर्मृदूपक्रमकठिनपरैः प्राय आद्ये प्रसाध्यम् ।
कृत्स्नाक्षेपोपशान्त्यै प्रथम इह ततः पाद उक्तस्त्रिपादी काचित्काक्षेपपूर्वाखिलकलहसमुन्मूलनाय प्रणीता ॥७९॥

अस्पष्टस्पष्टरूपस्फुटतरचिदचिल्लिङ्गवद्वाक्यचिन्ता भाष्ये दीपावतारेऽप्यगणि नयगणैस्सम्प्रवृत्ता त्रिपाद्याम् ।
अत्यन्तास्पष्टलिङ्गान्वितविषयमुशन्त्याद्यपादं तु केचित् तत्रेदं तारतम्यं नियतनिजबलैः कर्मतार्तीयमानैः ॥८०॥

पूर्वत्रासिद्धरूपैस्स्वमतिविरचितोन्नीतिभिः पूर्वपक्षस्सिद्धैस्साधारणैरप्युपधिनियमितैः प्रत्यवस्था द्वितीये ।
स्पष्टासाधारणत्वैरुपरि परमतानूक्तिकल्पैरथेतिन्यायैकत्रिंशदत्र प्रतिचरणविभक्त्यन्विताऽन्वेषणीया ॥८१॥

विश्वं पादे द्वितीये वपुरिति कथयंश्चिन्त्यते वाक्यवर्गो विश्वाधारस्स आत्मेत्यभिलपनपरस्तर्कणीयस्तृतीये ।
तुर्ये साङ्ख्यादिपक्षोदितपरिपठनभ्रान्तिरुन्मूलनीयेत्येवं केचित्त्रिपादीं जगदुरयमपि श्रोतृबुद्धेस्समाधिः ॥८२॥

—( अथ सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १२ ॥ )—सू० सर्वत्र प्रसिद्धोपदेशात्. १.२.१.

यस्य प्राणश्शरीरं स खलु हिततमोपास्तिकर्मप्रसक्तस्तस्मिञ्जीवत्वशङ्कां जगदुपजनके सौति शाण्डिल्यविद्या ।
पूर्वन्यायाच्च युक्तं दमनमिह महावाक्यतः प्रक्रमस्येत्युत्थाने प्रक्रमोक्तानुगुणमिति महावाक्यमेकीकरोति ॥८३॥
अन्वारुह्यात्र भेदं प्रथममधिकृतिर्भाषिना किंनिमित्तं विध्यैकत्वेऽनुवादः पर इह गुणविध्यर्थमेवेति युक्तम् ।
सत्यं ब्रह्मानुमत्य क्वचिदुपनिषदि क्वापि कल्प्ये विवादे चिन्तैषोदाहृतिस्स्यात्परमतरचितेत्यर्थसिद्धिस्तु बोद्धया ॥
सर्वत्वं कर्मभिस्स्वैर्जनिमति घटने ब्रह्मशब्दोऽत्र चैवेत्यल्पस्थानोऽल्पमानस्सुखतदितरभुग्जीव एवेति चेन्न ।
तज्जत्वादेरनूक्तेर्विविधगुणभिदादर्शनात्सर्वतादेस्स्वारस्यादप्यणुत्वं ह्युपधिकृतमिहोपास्तये ज्यायसि स्यात् ॥८५

--( अथ अत्त्रधिकरणम् ॥ १३ ॥ )--सू० अत्ता चराचरग्रहणात् ॥ १.२.९.

अत्ता खल्वोदनादेर्भवभुगिति कठश्रुत्यधीतोऽप्यसौ स्यान्न स्यान्मृत्यूपसिक्तस्थिरचरनिखिलग्रासतस्तद्द्वयोक्तेः ।
जीवव्यावर्तनं च प्रकरणविदितं भोक्तृतोक्तिर्द्वयोस्तु प्रेर्यत्वप्रेरकत्वप्रतिनियतरसाच्छत्रिनीत्याऽथवा स्यात् ॥८६॥
सत्त्वं स्वाद्वत्त्यनश्नन् ज्ञ इति विभजनात्पैङ्ग्यधीतं तु सत्त्वं बुद्धिः प्राणोऽथवेति त्वृतमिह पिबतोर्जीव एकस्तयोश्चेत् ।
मैवं जन्तौ तु सत्त्वश्रुतिरियमुचिता कर्मभुङ्नाप्यनश्नन् तत्प्रश्नप्रक्रमोऽन्याशय इदमपि चाभाषि पूर्वापराद्यैः ॥८७॥

–(अथ अन्तराधिकरणम् ॥ १४ ॥)–सू० अन्तर उपपत्तेः ॥ १.२.१३.

यद्वृत्तादेर्य एषोऽक्षिणि पुरुष इति श्रूयमाणोऽस्तु जीवो यद्वाऽक्ष्णो देवताऽर्कः प्रतिकृतिरथवा तत्र दृश्येति चेन्न ।
एतद्ब्रह्मैतदेवामृतमभयमिदं कं खमित्याद्यधीने स्संयद्वामत्वमुख्यैस्स्थितिनियतिबलादर्चिराद्युक्तितश्च ॥८८॥
स्वातन्त्र्योत्तंसिनासु श्रुतिषु न फलदस्यैव वेद्यत्ववादः कल्याणालोकनादेरिव विधिबलतो वेदनस्यार्थवत्त्वात् ।
तस्मादक्ष्यन्तरस्थः प्रतिकृतिपुरुषो युज्यते पूर्वपक्षे सेयं पूर्वापरास्वप्यधिकृतिषु यथासम्भवं नीतिरूह्या ॥८९॥
पूर्वन्यायेऽग्निविद्या पुरत उपनता मध्यतस्त्वत्र तस्मात्तद्वन्न ब्रह्मविद्यानुगतिरिति भवेदक्षिविद्या ततोऽन्या।
मैवं विच्छित्तिरङ्गैर्न हि भवति मिता चाङ्गताऽनेकधाऽस्याः प्रोक्तं च ब्रह्मविद्यानुगुणमिह फलं प्रावृतु न ब्रह्मदृष्टिः॥

–(अथ अन्तर्याम्यधिकरणम् ॥ १५ ॥)– सू० अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥ १.२.१९.

अन्तर्यामी स जीवो बहुविधकरणायत्तधीवृत्त्यनुक्तेर्नान्यो द्रष्टेति चोक्तेरिति यदि न नियन्त्रन्तरस्य व्युदासात् ।
द्रष्टृत्वाद्यं च तत्तद्विषयघटितधीरूपमीशे हि मुख्यं तद्धर्माः काण्वमाध्यन्दिनपठितिगतास्तस्य चात्मा शरीरम् ॥९१
स्थानैक्यादत्र शाखाद्वयपरिपठितावात्मविज्ञानशब्दा वेकार्थावित्यकम्प्यं तदपि कथयतो बुद्धिमेवेत्यपार्थम् ।
लोकाम्नायप्रसिद्ध्योरनुगमत इमौ चेतने ह्येकतानौ बाधः केनापि नास्मिन्भवति च सत इत्यादिभिस्सामरस्यम् ॥

—( अथादृश्यत्वादिगुणकाधिकरणम् ॥ १६ ॥ )—सू० अदृश्यत्वादिगुणको धर्मोक्तेः ॥ १.२.२२.

दृश्यत्वादेर्निषेधो विकृतिमिति भवत्यक्षरे सन्निकर्षात् पञ्चम्युक्ताक्षरं तत्तदवधिकपरः पञ्चविंशोऽस्तु मा भूत् ।
सर्वज्ञत्वादिदृष्टेः प्रथमसमुदितं त्वक्षरं ब्रह्म शुद्धं पश्चादुक्तं तु जीवादिकमवधितया भेदतस्तत्परोक्तेः ॥९३॥

--( अथ वैश्वानराधिकरणम् ॥ १७ ॥ )--सू० वैश्वानरस्साधारणशब्दविशेषात् ॥ १.२.२९.

स्वर्लोकादित्यवाताम्बरसलिलमहीरूपमूर्द्धादिकॢप्त्या ध्येयो वैश्वानरात्मा स्थिरबहुविशयरश्शब्दलिङ्गादिमाम्यात् ।
मेवं ब्रह्मेत्यधीतेर्भुवनतनुतया योगतस्त्वग्निशब्दो वैशिष्ट्याद्वा क्रियाङ्गं स्ववपुषि परधीर्गार्हपत्यादिधीश्च ॥
अन्यस्मिन्नन्यदृष्ट्या न भवति विदुषां क्वापि निश्श्रेयसाप्तिस्तस्माद्वैश्वानरोऽसौ न पर इति फलं त्वन्न सिद्ध्यादि मैवम्।
ब्रह्मैव ह्यन्यदृष्ट्यन्वितघटितमिह ब्रह्मशब्दाद्यबाधात् सर्वाघध्वंस उक्तः फलमपि परमं ब्रह्म च व्याप्तमन्नम् ॥
त्रिष्वत्रोपासितॄणां मितहृदयगुहास्थन्तरश्चिन्त्य उक्तो विश्वान्तर्यामितादेर्विपुलपरिमितिश्चिन्तनीयस्त्रयेऽथ ।
षट्सु ब्रह्मात्मशब्दौ पुरुषपदमपि क्षेत्रतज्ज्ञप्रपञ्चव्यावृत्ते विश्वहेतौ प्रकरणनियमान्नामवृत्त्या नमन्ति ॥९६॥
तत्त्वत्वादेर्हि सर्वं जगदभिगदितं ब्रह्मभावेन पूर्वं सर्वान्तर्यामिता च प्रभवितुरुदिता सर्वतद्देहता च ।
तस्माद्विश्वैक्यबाधप्रभृतिबहुविधापार्थसम्भ्रम्यमाणक्षुद्रक्षीवोक्तिजालं निखिलमिह नयैस्सूत्रकारो निरास ॥९७॥
स्वाधीनाशेषसत्तास्थितियतनतया सर्वभावेन तिष्ठन् ग्रस्ताशेषोऽक्षिनित्यस्थितिरखिलतनुः कल्पिताग्न्यादिगात्रः ।
स्वर्लोकाद्यङ्गवैश्वानरपदविषयो लक्षणस्यादिमस्य प्रोक्तः पादे द्वितीये श्रुतिनिकरशिरश्शेखरः श्रीनिवासः ॥९८॥

इति प्रथमस्याध्यायस्य द्वितीयः पादः ॥ २ ॥ अथ प्रथमस्याध्यायस्य तृतीयः पादः ॥३॥

( द्युभ्वाद्यधिकरणम् ॥ १ ॥ )—सू० द्युभ्वाद्यायतनं स्वशब्दात् ॥ १.३.१.

स्पष्टैर्जीवादिलिङ्गैर्युतमिह हि वचस्साध्यते ब्रह्मनिष्ठं मध्येऽत्राधिक्रियोक्तिस्त्रिषु किमिति न तत्तत्प्रसङ्गात्तदुक्तेः।
किञ्चास्यामर्धलोकायतिकनिरसनं प्रस्तुतार्थोपयुक्तं ब्रह्मोत्कर्षश्च सिद्ध्येद्द्वलति दिविपदां कारणैक्यभ्रमश्च ॥९९॥
न्यायास्सप्तैव साक्षात् परविषयतया संघटन्तेऽत्र पादे सर्वाधारस्स आत्मा स्वमहिमनिलयस्तत्र तात्पर्यभूमिः ।
तत्सिद्ध्यै शासनाद्यं कथितमिह मिथस्स्यूतमालोचनीयं सर्वेशत्वं च षष्ठप्रमितनयमितं पश्चिमस्यायरक्ष्यम् ॥१००॥
सिद्धं प्रागेव मुण्डोपनिषदि परमं ब्रह्म तद्धर्मभेदैर्भेदोक्तेश्चैत्यकाण्डे किमिति पुनरिमां पिष्टपेषं पिनष्टि ।
सत्यं क्षेत्रज्ञधर्मैः पटुभिरुपनता प्रक्रियाभेदशङ्का प्रख्याप्य प्रत्यभिज्ञामपुनरुदयमुन्मूल्यते शब्दपूर्वैः ॥१०१॥
यस्मिन्नोतं मनोऽन्यैस्सहकरणगणैर्जायते यश्च नाना नाड्याधारश्च योऽन्तश्चरति स करणी कर्मभोक्तेति चेन्न ।
विश्वाधारात्मभावादमृतवितरणान्मुक्तसृप्यत्ववादात् प्रागुक्तप्रक्रियैक्यादनशनसहितात् काशनाच्चान्यसिद्धेः ॥१०२
व्याप्ते तत्राक्षमोतं यदि किमिह ततो जन्म चास्येच्छयोक्तं नाडीचक्रस्य नाभिर्भवति च स परो हार्दरूपेण तिष्ठन्।
निष्कम्पव्यापिनोऽन्तश्चरणमपि शुभैर्विग्रहैरस्ति लोके सौबालाम्नातवद्वा चरणमिदमपि स्यादधिष्ठानमात्रम्॥१०३॥

—( अथ भूमाधिकरणम् ॥ २ ॥ )—सू० भूमा संप्रसादादध्युपदेशात् ॥ १.३.७.

आत्मज्ञानाभिलाषादनुपरतशुचे नारदाय प्रयुक्तं प्राणे सानत्कुमारं विरमति वचनं हिंसनार्हस्स जीवः ।
अल्पप्रत्यर्थिभूमा निरवधिकसुखोऽप्येष एवेति चेन्न प्राणाख्यात्सत्यशब्दोदितमधिकतयोपास्यमत्र ह्युपात्तम् ॥१०४

नामाद्याशान्तवेद्ये प्रतिवचनवशात् प्रश्नतश्चाधिकोक्तेः प्राणे विश्रान्तिदृष्ट्या भवतु तदवधिः प्रस्तुतात्मोपदेशः ।
मैवं जातो हि नामादिवदिह परमादात्मनः प्राण उक्तः स्वस्मादित्यत्र तत्स्यादिति न विघटनात् स्वारसिक्या विभक्तेः ॥

प्राणद्रष्टाऽतिवादी तदनुवदनतश्चोदितस्सत्यवादस्तस्मात्सर्वाहमर्थस्सकलजनयिता प्राण एवेति चेन्न ।
एष त्वित्यन्यतोक्तेरतिवदनकृतः प्राक्तनादस्य तद्वन्न त्वन्योऽस्त्यग्निहोत्री स्वमहिमनिलये ह्यत्र धर्मोपपत्तिः ॥ १०६

नामादौ वाक्च तस्योपरि तदनु मनश्चाथ सङ्कल्पनामा चित्तं ध्यानं च तस्माद्बलमपि च ततस्स्याच्च विज्ञानपूर्वम् ।
अन्नं तोयं च तेजो गगनमपि ततो मन्मथस्स्यात्तथाऽऽशा प्राणस्सत्यः परात्मा सकलनियमिना गम्यते भूमवाक्ये ॥

—( अथाक्षराधिकरणम् ॥ ३ ॥ )—सू० अक्षरमम्बरान्तधृतेः ॥ १.३.९.

प्रख्याताकाशपूर्वस्वविकृतिवहनादक्षराख्यं प्रधानं तस्याप्याकाशतोक्तौ धृतनिखिलजगत् क्षेत्रितत्त्वं तु तत्स्यात् ।
मैवं द्रष्टृत्वपूर्वैरनितरनियतैरशासनायत्तधृत्या किञ्च द्रष्ट्रन्तरस्य व्युदसनमिह तत्तुल्यतद्द्रष्ट्रपोहः ॥१०८॥

—( अथेक्षतिकर्माधिकरणम् ॥ ४ ॥ )—सू० ईक्षतिकर्मव्यपदेशात्सः ॥ १.३. ११.

लक्ष्मीभूतोऽयमेकः खलु पुरुष इह ध्यायनेरीक्षनेश्च क्षेत्रज्ञस्सोऽयमण्डाधिप इतरपरात्स्वान्यजीवात्परोऽसौ ।
नो चेद्भौमादिभोगप्रकरणविहर्निर्बोभवीतीत्ययुक्तं तस्मिन् शान्तामृतत्वप्रभृतिपरगुणख्यात्यनूक्त्योरयोगात् ॥१०९॥

नन्वत्रोङ्कारमात्रात्रयफलगणनारूढभूम्यन्तरिक्षप्रत्यामत्त्या निवासस्सरसिजवसतेर्ब्रह्मलोकोऽस्तु मैवम् ।
पापोन्मुक्तेन लभ्यो ह्ययमिह कथितस्सूर्यसम्पत्तिपूर्वं सोढव्यो मध्यलोकैर्व्यवधिरिति समस्तत्समाधानमार्गः॥११०॥

—( अथ दहराधिकरणम् ॥ ५ ॥ )—सू० दहर उत्तरेभ्यः ॥ १.३.१३.

दहं हृत्पुण्डरीके गगनमभिहितं तैत्तिरीयश्रुतौ यच्छन्दोगैस्तत्र गीतं यदपि च दहराकाश इत्येतदेकम् ।
भूताद्यं तत् प्रसिद्धेर्महिमत इति न प्रत्यनीकैरनेकैः श्रौती च स्यात् प्रसिद्धिर्भगवति बलिनो लिङ्गवर्गैस्सनाथा ॥

बाह्याकाशश्च यावानयमपि हि तथेत्येतदक्लिष्टमीशे सत्यात्मब्रह्मशब्दा नभसि न कथमप्यन्वयं प्राप्नुवन्ति ।
कामाधारश्च योऽसै समगणि दहराकाशवाचाऽत्र नित्यस्तस्येव ह्येष आत्मेत्यनुवदनमतस्तद्गुणाश्चिन्त्यकामाः ॥

सर्वेशाधारतोक्त्या भवतु च हृदयव्योम तद्वाज्यधीतं छान्दोग्यस्थो निषादस्थपतिनयपदं ब्रह्मलोकादिशब्दः ।
आपस्तम्बश्च वैभाजनपुरमवदद्ब्रह्म सर्वात्मभूतं पूस्तस्य प्राणिनस्स्युस्तदपि तदपि हि स्यात् पुरं सर्ववासात् ॥११३॥

जीवस्तर्ह्येष आत्मा गुणगणघटनात्तत्परामर्शदृष्टेरल्पत्वाद्युक्तितश्चेत्यसदनुपधिकात्सत्यसङ्कल्पतादेः ।
विश्वैकाधारतादेरपि स खलु परो दह्रतौपाधिकी स्यात् प्राजापत्यात्तु वाक्यात्परसमदशया तद्गुणोक्तिर्विमुक्ते॥११४॥

दह्राकाशोऽपवर्गप्रद इति गदितुं संप्रसादोक्तिरत्र प्राजापत्ये तु वाक्ये परपरिपठनं प्राप्यनिष्कर्षणार्थम् ।
आकाङ्क्षाद्यैस्तदेवं परतदितरयोरन्विते वाक्ययुग्मे युक्तं नान्योन्यबाधप्रभृतिकमिति तत्सामरस्यं हि सौत्रम् ॥११५॥

—( अथ प्रमिताधिकरणम् ॥ ६ ॥ )—सू० शब्दादेव प्रमितः ॥ १.३.२३.

प्राणेशोऽङ्गुष्ठमात्रः क्वचिदनुकथितस्सञ्चरन् कर्मभिः स्वैरन्यत्राङ्गुष्ठमात्रं पुरुषमपि यमो निश्चकर्षेति दृष्टम् ।
तस्मादेतत्प्रमाणप्रमितमुपनिषज्जीवमाहेत्ययुक्तं वाक्यस्थेशानतादेर्नरहृदयपरिच्छित्तितस्तद्धि मानम्॥११६॥
न ह्यङ्गुष्ठप्रमाणं हृदयमखिलजन्त्वाश्रयं तत् परस्मिन्व्याप्ते तन्मानतोक्तिः क्वचिदिति मनुजाधिक्रियोक्तिप्रसङ्गे ।
सूत्रद्वन्द्वद्वयान्तस्त्रिभिरधिकरणैश्चिन्त्यते तद्विशेषस्तार्तीयैस्स्थापनीया त्ववजिगमिषिता नेतिकर्तव्यताऽत्र ॥११७॥

—(अथैतद्गर्भे देवताधिकरणम् ॥ ७ ॥ )—सू० तदुपर्यपि बादरायणस्सम्भवात् ॥ १.३.२६.

शब्दात्मा लौकिकार्थाकृतिरियमथवा देवतानां न तस्या ब्रह्मोपासेत्यनार्षं श्रुतपरिहरणं कल्पनं चाश्रु तस्य ।
विश्वस्रष्टा च मा भूदनुमितिविषयस्तत्परैस्त्वेष शास्त्रैर्निर्बाधैस्स्थापितः प्राक् स्वयमपि विभुना नैव शक्यापलापः ॥
सामर्थ्यं देवतानामुचिततनुभृतामर्थिता तापभाजां सम्पद्येतेति तासामपि भवति परोपास्तिवर्गाधिकारः ।
ख्यातं मन्त्रार्थवादप्रभृतिषु निखिलं बाधदोषाद्यभावे मिथ्येत्युद्घोषयन्तस्स्वत इह कथितां मानतां प्रस्मरन्ति ॥११९॥
द्वेधा वृत्तिः स्तुतौ स्यात् स्वपरगुणमुखी प्राक्तनी तावदर्थ्या निर्धार्यः पश्चिमायामपि निपुणधिया मुख्यधर्मैकदेशः ।
रुच्यर्थायां च तस्यामनृतकथनतो रोचना नं ह्यमुग्धे भूतार्थे का स्तुतिस्स्यादिति मुनिगदितं गौणतादेर्निवृत्त्यै ॥१२०
नानादेहाप्तिशक्ताः कथमिह युगपत्कर्मसन्निध्यनर्हास्तत्तद्वृत्तान्तसत्त्वे श्रुतिषु भवति नानित्ययोगः प्रवाहात् ।
काण्डादौ कर्तृवादः प्रवचननियता वेदनित्यत्वसिद्धेरीशः प्राचीनकल्पक्रमत उपदिशेद्वर्णसर्गेऽपि वेदान्॥१२१॥
वेदानामीशबुद्ध्या क्रमनियमहतिः कल्पभेदे यदीष्टा मन्त्रांशानां तथा स्यान्न खलु तदुचितं व्रीहिसोमादिसाम्यात्
इत्थं विध्यर्थवादक्रम इति नियते पाक्षिके वा तथात्वे पक्षोऽसावाक्षपादः परमतपरिषत्कोटिमाटीकतां नः ॥१२२॥
सौक्ष्म्यात्तुल्याभिघारात् सहकृदपगमाच्छादकादान्यपर्यादत्यासत्त्याऽतिदूराद्वलवदभिभवानुद्भवाक्षोपघातैः ।
नेक्ष्यन्ते वर्तमानान्यपि हि सुरगणस्तद्वदन्तर्द्धिशक्तेः प्रख्यातास्सिद्धिभेदा अपि जननतपोयोगमन्त्रौषधीभ्यः ॥

( अथैतद्गर्भे मध्वधिकरणम् ॥ ८ ॥ ) सू० मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ १.३.३०.

स्यादेवं देवमात्रे मनुज इव परोपास्तिमात्रं तथाऽपि स्वस्यैवाराध्यभावस्स्वपदमपि फलं यत्र नात्राधिकारः ।
मैवं सर्वान्तरात्मा स्वतनुभृदिति चोपासते मुक्तिकामाः कामादावर्तते तु स्वपदमपि फलं कल्पमन्वन्तरादौ ॥१२४॥

अथैतद्गर्भे अपशूद्राधिकरणम् ॥ ९ ॥ सू० शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ १.३.३३.

जैमिन्युक्तापशूद्राधिकरणसरण्यानास्ति विद्याप्तिलब्धिः शूद्रादीनां तथाऽपि स्मृतपरभजनाधिक्रिया जाघटीति ।
श्रोतृत्वाद्भारतादेस्स्वजनिसमुचितैः कर्मभिश्चेत्ययुक्तं प्राप्ते ब्रह्मोपदेशे ह्युपनयनपरामर्शनादि प्रसिद्धम् ॥१२५॥

शूद्राणां भारतादेश्श्रवणमनुमतं पापशान्त्यादिसिद्ध्यै वेदार्थापातबुद्धिर्यदनधिकरणा नोपबृंह्येत तैस्सः ।
विद्यास्थानानि शूद्रैर्मुरभिदकथयत् पाण्डवाय द्विसप्ताप्यस्प्रष्टव्यानि तस्मान्न हि विकलधियां स्यादुपासाधिकारः ॥
गीतं शूद्रादिकानामपि परभजनं केवलं स्वार्हधर्मैर्धर्मव्याधस्तुलाधृद्विदुर इति च ते प्राग्भवाभ्याससिद्धाः ।
वक्ता शूद्रेति जानश्रुतिमभिमुखयन् शोकमस्य व्यनक्ति क्षत्तृप्रैषादिलिङ्गैस्स्फुटतरविदितं क्षत्रियत्वं हि तस्य॥१२७

–( अथ अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ १०॥ )–सू० आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥१.३.४२.

धूत्वेति प्राच्यवाक्यप्रकृत इह भवेन्मुक्त आकाशनामा बन्धेऽसौ नामरूपे वहति तदनु च ब्रह्मभावे जहाति ।
इत्यन्याभ्यं पुरोक्तः पुनरयमभिसम्भाव्य एव ह्युपात्तो ब्रह्मत्वं न ह्यवस्था श्रुतिषु च युगपज्ज्ञाज्ञतादिर्विभक्तः॥१२८॥
विश्वात्माऽनन्तभूमा नियमनधृतिकृन्मुक्तभोग्यस्वभावो दह्रस्वाधारसर्वो हृदयपरिमितावस्थया सर्वयन्ता ।
देवादीनामुपास्यो वसुमुखविबुधैस्स्वात्मभावेन सेव्यश्शूद्राद्योपास्त्यनर्हः प्रभुरिह बुबुधे नामरूपैककर्ता ॥१२९॥

इति प्रथमस्याध्यायस्य तृतीयः पादः ॥ ३ ॥ अथ प्रथमस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

–(आनुमानिकाधिकरणम्॥१॥)–सू० आनुमानिकमप्येकेषामितिचेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयतिच॥१.४.१.

निर्णीतं वाक्यजातं परविषयतया स्पष्टजीवादिलिङ्गं तत्तच्छायानुसारि प्रथयति तु वचस्तत्परं तुर्यपादे ।
षड्भिर्द्वाभ्यां च तत्र प्रशमयति नयैस्साङ्ख्ययोगोक्तशङ्कां घट्टौ जाघट्ट इत्थं कथितनिगमनं त्वष्टमं केचिदाहुः ॥
द्वाभ्यां क्षेप्यं प्रधानं कपिलमतमथ त्वेकतोऽन्योक्तसङ्ख्या तुर्येणाव्याकृतोक्तेरपि विभुरवधिस्स्थाप्यते द्वारवृत्त्या ।
शुद्धाशुद्धौ च जीवावधिकरणयुगेऽनन्तरं वारणीयौ शेषं तन्त्रान्तरोक्तेश्वरनिरसनकृत्तुर्यपादाष्टकेऽस्मिन् ॥१३१॥
अक्षाद्यव्यक्तनिष्ठं जडमथ पुरुषं तत्त्वकाष्ठां विविच्य ब्रूते वल्ली कठानां परमतपठितां प्रक्रियामित्ययुक्तम् ।
तत्रस्थानेकवाक्योदितविविधवशीकार्यमुख्यक्रमोक्तेश्शान्तात्मा विष्णुरुक्तः पर इह पुरुषः प्रत्यभिज्ञाप्यते च ॥१३२॥
न ह्यर्था इन्द्रियाणां प्रकृतिरथ मनोहेतुरेषां न चेष्टं बुद्धिश्चैतन्न मूने नच महति महाज्ञायते बुद्धिसंज्ञः।
भोक्तुर्युक्तं महत्त्वं महति नहि भवेदात्मता पारिशेष्यादव्यक्तोक्तिश्शरीरे तदिह न कपिलप्रक्रियाप्रत्यभिज्ञा॥१३३॥

–( अथ चमसाधिकरणम् ॥ २ ॥ )–सू० चमसवदविशेषात् ॥ १.४.८.

स्वातन्त्र्येण ह्यजाया निखिलजनकता सूच्यते क्वापि वाक्ये बद्धोऽजस्तत्र शेते त्यजति पुनरिमां भुक्तभोगामजोऽन्यः।
इत्युक्तेस्तान्त्रिकी सा त्वियमिति यदि नाजात्वमात्राभिधानादस्वातन्त्र्यप्रसिद्धेस्सृजतिरपि परप्रेर्यतां नोपरुन्ध्यात् ॥

–( अथ संख्योपसंग्रहाधिकरणम् ॥ ३ ॥ )–सू० न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥१.४.११.

यस्मिन् पञ्चेति वाक्ये परपरिगणिता विंशतिः पञ्चयुक्ता प्रोक्ता सप्तम्यधीतस्त्विह पुरुषगणोऽनन्यो नष्टोऽस्तु मैवम् ।
आकाशस्य स्वनाम्ना पृथगनुकथनात् सप्तमीशक्यबाधात् षड्विंशो ह्यत्र सर्वाश्रय इति विदितोऽनूद्यते ब्रह्मताद्यैः ॥
संज्ञोपाधिस्समासो ह्ययमिह निगमे सप्तसप्तर्षिनीत्या प्राणाद्यं तन्मनोन्तं प्रकरणनियतं पञ्चकं धीन्द्रियाख्यम् ।
ज्योतिश्शब्देन शाखान्तरविदितमिदं न्यूनवादस्तु पूर्वो घ्राणं वक्त्यन्नशब्दो रसनमपि सह प्राणशब्दस्त्वगर्थः ॥

--( अथ कारणत्वाधिकरणम् ॥ ४ ॥ )--सू० कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १.४.१४.

विश्वोपादानवक्त्री श्रुतिषु सदसदव्याकृतोक्तिः परोक्ते ह्यव्यक्तेऽन्वेति तस्मात्तदितरदखिलं नेयमत्रेति चेन्न।
यत्रासत्त्वादि दृष्टं प्रकरणविदितं तत्र सर्वज्ञताद्यं लिङ्गं स्यामित्यधीतं स्थिरमपि तदिहाबाध्य आत्मादिशब्दः॥१३७॥

आसीदग्रे त्वसद्वा इदमिति विलयावस्थतामात्रमुक्तं नैवासीत् किञ्चिदित्याद्यपि विलयपरं शून्यतादेर्निषेधात् ।
सर्वस्याव्याकृतत्वं विभजनविरहात्तादृशावस्थतत्तद्द्रव्यस्तोमान्तरात्मा तदिह सदसदव्याकृताद्युक्तिवाच्यः ॥१३८॥

- ( अथ जगद्वाचित्वाधिकरणम् ॥ ५ ॥ )-सू० जगद्वाचित्वात् ॥ १.४. १६.

यस्यैतत्कर्म वेद्यस्स इति वचनतः कर्मवश्यप्रतीतेः कर्ता पुंसां स एव स्वकृतपरिणतेरित्युपक्रान्तिभग्नम् ।
बालाक्यज्ञाततत्त्वान्तरमुपदिशतः स्यादिहाजातशत्रोस्तज्ज्ञातोक्तिर्निरर्था जगति कृततया कर्मशब्दोऽत्र मुख्यः ॥

एवं जीवातिरिक्ते प्रकरणनियते तत्र यज्जीवमुख्यप्राणाख्यानं न तेन क्षतिरिह हि तथा तद्विशिष्टेऽप्युपासा।
प्राणस्य प्राणभाजोऽप्यधिकरणतया वाजिवाक्योक्तनीत्या ब्रह्मज्ञप्त्यै तदन्यप्रकथनमिति हि स्थापना सार्वभौमी ॥

–( अथ वाक्यान्वयाधिकरणम् ॥ ६ ॥ )–-सू० वाक्यान्वयात् ॥ १.४.१९.

पत्यादीनां प्रियत्वं श्रुतिरनुवदति ह्यात्मनः काममिच्छेद्ये तेनासौ पुण्यपापोदितफलभुगिति प्रक्रमादिप्रतीपम् ।
तत्तद्भोगप्रदातुः प्रथयति हि विभोः कामतस्तत्प्रियत्वं द्रष्टव्यश्चैष मुक्त्यै श्रुतिनिकरमितः प्रत्यभिज्ञाप्यतेऽत्र॥१४१
व्युत्पत्त्या ह्यात्मशब्दः प्रथयति परमं ब्रह्म यद्वा समानात् सार्थोऽयं जीवशब्दो वदति च परमं द्वारवृत्त्येति पक्षाः।
व्यक्त्यैक्यादाश्मरथ्यो निरुपधिकदशाद्वैततस्त्वौडुलोमिस्तत्स्थत्वात्काशकृत्स्नः परविषयतया जीवशब्दं जगाद ॥
भेदोपाधिव्यपाये भवभृदयमियाद्ब्रह्मतामित्ययुक्तं नित्यं तद्भेददृष्टेरतिपतितभवे साम्यसाधर्म्यशब्दात् ।
मृत्तत्कार्यक्रमश्च श्रुतिशतविहतस्तेन जीवोक्तिमीशे तत्स्थत्वात्काशकृत्स्नो यदिह निरवहद्वयामसिद्धान्त एषः॥

--( अथ प्रकृत्यधिकरणम् ॥ ७ ॥ )–सू० प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ १.४.२३.

मृत्पिण्डादेः कुलालप्रभृतिरिह पृथक्तद्वदेवादिकर्ता नोपादानं विकारैर्विरहत इति न द्वारमात्रे विकारात् ।
मृद्दृष्टान्तादिमात्रान्नच विकृतिरसौ स्यात् परस्य स्वरूपे देहद्वारोर्णनाभिप्रभृतिविकृतिवद्व्याप्तेर्दर्शितत्वात्॥१४४॥
स्वज्ञानाद्यं स्वजन्यं भवति सृजति च स्वान्यसंयोगमीशस्संयोगे मूर्तनिष्ठे प्रकृतिरपि हि तत्स्यान्निमित्तं क्रियातः ।
एकस्यादौ बहु स्यामिति बहुभवनं सौभरिन्यायसिद्धं भेदाभेदश्रुतीनामविहतिरिह च स्याद्विशिष्टैक्ययोगात् ॥१४५
कार्यैक्ये हि प्रतिज्ञा तदनुगुण उदाहारि दृष्टान्तवर्गः स्रष्टुस्स्यामित्यभिध्यां श्रुतिरिह वनतां वृक्षतादिं च वक्ति ।
आत्मानं चैष एव स्वयमकुरुत तद्भूतयोनित्वमुक्तं तस्मात्कर्ताऽपि देवः प्रकृतिरपि भवेत् सर्वतत्त्वान्तरात्मा ॥१४६॥
नोपादानं निमित्तं किमपि तदितरत्कारणं तद्धि विद्मो यद्वा सिद्धं निमित्तं न भजति तदुपादानतामित्ययुक्तम् ।
इष्टादाकारभेदादुभयघटनतो लोकवेदानुरोधे सिद्धे स्वच्छन्दलक्ष्मप्रणयनकुसृतिः पाकचिन्ताविपाकः ॥१४७॥

उक्त्वा तत्त्वान्तराणां विलयमथ तमस्येकतामात्रमुक्तं प्रोक्तं चानादितादिप्रकृतिपुरुषयोर्वदतद्वेदिवाक्यैः।
लीयेते तौ परस्मिन्निति तु लयवचस्स्यादयस्तोयनीत्या तेनासौ भोक्तृभोग्यप्रभृतिकवचिताद्विश्वसृष्टिस्समीची॥१४८

—( अथ सर्वव्याख्यानाधिकरणम् ॥ ८ ॥ )—सू० एतेन सर्वे व्याख्याता व्याख्याताः ॥१.४.२९.

अग्रे संवर्तनं भात्यवितथवचसि क्वापि हैरण्यगर्भं ग्रस्ताशेषस्वकार्ये तमसि च शिव एवेति केचित्पठन्ति।
एतादृग्वाक्यवर्गस्स्फुटभवदधिकाशङ्कनस्तम्भनाथ प्रागुक्तान्नीतिभेदानतिदिशति परं शिष्यशिक्षैकचित्तः ॥१४९॥
विश्वेशश्श्रीपतिश्चेद्भवति कथमसौ त्राणमात्राधिकारी दूरं गत्वाऽपि दुःख्यद्विधिशिवतुलया घट्टकुटयां प्रभातम्।
मैवं मत्स्यादिभावेष्विव निजविभवानुक्रियानाटयमेतद्ब्रह्मेशस्रष्टरि स्यान्निरवधिकबृहत्पौरुषे पूरुषे नः ॥१५०॥
साङ्ख्योक्तप्रक्रियोक्तेस्तदभिमतसृजेस्तत्प्रसङ्ख्यानकॢप्तेस्तत्प्रोक्ताव्याकृतैक्यात्स्ववृजिनवचनात्तत्फलावद्ययोगात्।
भेदात्कर्तृप्रकृत्योर्द्रुहिणशिवमुखानेकहेतुश्रुतेश्च क्षिप्तं पादत्रयोक्तं श्रुतिहृदयसमुद्घाटनादन्वरक्षत् ॥१५१॥
जिज्ञास्यत्वेन सिद्धे स्थिरचरचिदचिद्देहिनि ब्रह्मतत्त्वे श्रुत्याद्यैरेव सूक्ता स्वरसगतिरियं कारणाम्नायवाचाम्।
बाधं रोधं च बाह्यान्तरमिह बहुधा वर्णयन्तो मुसल्या निष्काल्येरन्परस्तान्निषदुपनिषदां निश्चलत्वप्रसिद्ध्यै ॥१५२॥
आदौ जिज्ञास्यताऽऽस्तां बहुविहतिहता सह्यतां लक्षणोक्तिः मृष्यामश्शास्त्रयोनिप्रलपितमिह च स्तात्समन्वित्यपोक्तिः।
सूत्रैरेतैस्स्फुटार्थैस्सविषयवचनैर्निर्विशेषैक्यपक्षे मुख्येक्षाद्यैस्स्वधर्मैः प्रकृतिपुरुषतो भेदवादः कथं स्यात् ॥१५३॥

॥ समाप्तः प्रथमाध्यायः ॥

अथ द्वितीयाध्यस्यायस्य प्रथमपादः १.

—( स्मृत्यधिकरणम् ॥१॥ )—सू० स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ २.१.१.

तत्तादृक्तर्कतन्त्रक्रमनिपुणमहाबुद्धिसन्तोषसिद्धिर्यद्यप्युक्तेन लभ्या तदपि मृदुधियां हैतुकास्कन्दशङ्की।
स्थूणाखातक्रमेण स्थिरयति कथितं ब्रह्मणः कारणत्वं कार्यत्वं यस्य यादृक्छ्रुतिभिरवगतं तस्य तत्तादृशं च ॥१५४॥
पादद्वन्द्वं द्वितीये परिहरति परे कारणे बाह्यपीडां कार्यद्वारेण पादान्तरयुगमुदयत्यान्तरक्षोभशान्त्यै।
हेतुत्वायोगभङ्गः प्रथममिह विभोस्तस्य सार्वत्रिकत्वायोगक्षेपः परस्तात् फलति स च भवेच्छ्रौतनित्यं विहाय ॥१५५॥
तन्त्रच्छायानिदाने स्वयमुपनिषदामान्यपर्ये निरुद्धे तन्त्रेभ्यो दुर्बलत्वात्तदनुसरणमित्युज्जिहीते परोऽद्य।
इत्थं सत्यत्र तत्तत्स्मृतिनयकलितातिक्रमं तत्तदर्थैः प्रत्यस्तैर्वारयित्वा द्रढयति चलितं पादतः प्राच्यमर्थम् ॥१५६॥
निर्णीतं कर्मकाण्डे स्मृतिनयविहतौ निश्चलत्वं श्रुतीनां चर्चा तत्सिद्धयेऽसौ पुनरिति विफलः स्याद्द्वितीयाद्यपादः।
मैवं गम्भीरनानाश्रुतिशिखरपरिच्छेद्यदुर्बोधतायामाप्तोक्त्या तर्कतश्च क्षममनुसरणं पश्यतो ह्यत्र भङ्गः ॥१५७॥

द्वाभ्यां स्मृत्या विरोधं परिहरति ततस्त्वष्टभिस्तर्कबाधं तेनोपादानभावं दृढयति तु विभोः कर्तृतां तद्द्वयं च ।
तत्तत्क्षेपात्तुलाग्रद्वितयनतिसमुन्नामनीत्या प्रवृत्ते शङ्कावर्गे परीक्षासमनिहितमतिः पक्षपातं रुणद्धि ॥१५८॥
स्मर्ता श्रुत्यैव गीतः कपिलऋषिरसौ वासुदेवांशभूतः ख्यातो रामायणादौ प्रणिधिनिपुणधीर्वक्ति वेदान्ततत्त्वम् ।
तस्मादस्मद्विदूरे श्रुतिशिरसि तदुक्त्यैव निष्कर्षणं स्यान्न स्यादेकार्थमन्वाद्यनघबहुगिरा तत्र तत्त्वार्थसिद्धेः ॥१५९॥

—( अथ योगप्रत्युक्त्यधिकरणम् ॥ २ ॥ )—सू० एतेन योगः प्रत्युक्तः॥ २.१.३.

वेदान् पूर्वं विधाताऽलभत भगवतस्सर्वविद्यानियुक्तो वागीशश्चैष तस्मात्तदुदितविहतौ कम्पनं वेदमूर्ध्नः ।
मैवं तस्यापि वेदापहृतिमुखविपद्दर्शनात् क्षेत्रिभावात् भ्रान्त्यादिस्सम्भवेदित्यगतिकविषये पूर्ववन्निर्वहामः ॥१६०॥

--( अथ विलक्षणत्वाधिकरणम् ॥ ३ ॥ )--सू० न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ २.१.४.

विश्वं त्रैगुण्यवत् स्यात् त्रिगुणत उदितं नासमादित्ययुक्तं सर्वाकारेण साम्यं क्वचिदपि न भवेत् केनचित् साम्यमिष्टम्॥
भग्ना हेतुव्यवस्थोचितगुणसमता गोमयाद्वृश्चिकादौ स्थूलत्वं याति चेशः प्रकृतितनुरतस्सर्वचोद्योपमर्दः ॥१६१॥
ईक्षा तादृग्बहु स्यामिति सति पठिता तेजसोऽपां च दृष्टा सालक्षण्यं ततस्स्याज्जगत इति मृदुप्रज्ञपार्श्वस्थचोद्ये ।
तत्तन्मूर्तेः परस्येक्षणमिदमिति तद्वाक्यभावापलापी सामान्येनाभिमानिव्यवहरणमिह व्याहरत् पूर्वपक्षी ॥ १६२॥

--( अथ शिष्टापरिग्रहाधिकरणम् ॥ ४ ॥ )--सू० एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ २.१.१३.

संवादादक्षपादक्षपणककणभुग्भिक्षुपक्षेष्वणूनां विश्वं तद्धेतुकं स्यादिति मृदुमतिभिश्श्वावराहक्रमोक्तौ ।
अन्योन्यव्याहतार्थस्थपुटितकुहनायुक्तिदोषापनुत्त्यै भाति त्रय्यन्तसूर्यः प्रतिमततिमिरस्तोमकुक्षिंभरिर्नः ॥१६३॥

--( अथ भोक्त्रापत्त्यधिकरणम् ॥ ५ ॥ )--भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥२.१.१४.

एको यस्यास्ति देहस्स भवति विविधानन्तदुःखैकभोक्ता विश्वं देहः प्रभोश्चेत् स कथमतिपतेद्विश्वदुःखानुभूतिम् ।
इत्थं जीवेशसीमामपलपितुमनाः कोशभाजा श्रुतीनां सम्राड्भृत्यादिनीत्या शममिह लभतां साम्यवैषम्यदर्शी ॥

—( अथारम्भणाधिकरणम् ॥ ६ ॥ )—सू० तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ २.१.१५.

कार्यं धर्मैर्विरुद्धैः कट इव शकटात् कारणद्रव्यतोऽन्यद्व्यापारः कारकाणां विफल इतरथेत्यर्धवैनाशिकोक्तौ ।
द्रव्यैक्येऽप्यस्तु सर्वं तदभिमतदशाभेदतोऽसच्छ्रुतिश्चेत्यध्यक्षाल्लाघवाच्च श्रुतिकथितजगद्ब्रह्मतादात्म्यमुक्तम् ॥१६५॥
मायोपाधिस्वशक्तिव्यतिकरितपरब्रह्ममूलः प्रपञ्चो येषां तेऽप्यद्वितीयश्रुतिमवितथयन्त्यत्र तत्तद्विशिष्टे ।
अप्राधान्यात्तथा नः प्रकृतिपुरुषयोरन्तरात्मप्रधाने वाक्येऽस्मिन् स्थूलसूक्ष्मान्वय इति जगतोऽनन्यभावोपपत्तिः ॥
विश्वारम्भे विवर्तं शकलपरिणतिं शक्तिशेषस्य सूतिं व्यक्त्युल्लासौ विसृष्टिं विकृतिमनियतां तत्त्वपङ्क्तौ च सृष्टिम्।
तत्तद्वाक्यैकदेशः स्वरस इति मुधा कल्पयन्तस्तु मुग्धास्सर्वश्रुत्यैकरस्यप्रणयिभिरधरीचक्रिरे तत्त्वविद्भिः॥१६७॥

--( अथेतरव्यपदेशाधिकरणम् ॥ ७ ॥ )--सू० इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २.१.२१.

उक्तेऽनन्यत्वपक्षे चिदपि परिणतिर्ब्रह्मणस्स्यात्ततस्तज्जीवैक्यं तत्त्वमस्याद्यवगतमहतं दुःखसिन्धुश्च जीवः।
अभ्रान्तस्तु स्वदुःखं न सृजति न च तत् क्रीडयाऽप्यस्य मैवं तातस्थ्येनानन्यतोक्तेस्तदपि चिदचितोस्तच्छरीरत्वसिद्धेः॥

—( अथोपसंहारदर्शनाधिकरणम् ॥ ८ ॥ )—सू० उपसंहारदर्शनान्नेतिचेन्न क्षीरवद्धि ॥ २.१.२४.

शक्तौ कर्तृप्रकृत्योरुपकरणगणोपस्थितौ कार्यकृत्त्वं तस्मादग्रे सदेकं किमुपकरणयेदित्यसच्छक्तिभेदात्।
क्षीरायस्कान्तलूतात्रिदशमुनिमुखान्वीक्ष्य तोष्टव्यमस्मिन् संकल्पादेव जीवो नुदति निजवपुर्विश्वरूपस्तथेशः ॥१६९

—( अथ कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥ )—सू० कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २.१.२६.

कृत्स्नं कार्यात्मना चेत् परिणमति परं नावशिष्येत किञ्चिद्यद्यंशान्निष्कलत्वश्रुतिविहतिरिदं स्याद्विशिष्टेऽपि तस्मिन्
ब्रह्मोपादानतैवं न घटत इति चेन्न स्वपक्षेपु साम्यात्तन्मानात्तद्गृहीतौ श्रुतिमितमपि तल्लोकवत् स्वीकुरुष्व ॥१७०॥
संयोगाख्यं हि कार्यं विभुतदितरयोस्स्यादणूनां मिथो वा कार्त्स्न्येनांशेन वा तद्विहतमिति वदन् शून्यवादे निमज्जेत्।
सांख्योऽपि प्राह विभ्वीं प्रकृतिमिति कथं न्यूनसृष्टिस्ततस्स्यान्मायादिष्वेवमूह्यं निगमनिगदिता त्वक्षता पद्धतिर्नः ॥

—( अथ प्रयोजनवत्त्वाधिकरणम् ॥ १० ॥ )—सू० न प्रयोजनवत्त्वात् ॥ २.१.३२.

आत्मार्थं विश्वसृष्टिः कथमपि मततावाप्तकामस्य न स्यात् कारुण्याद्दुःखसृष्टिर्न भवति न च सा सर्वशक्तेश्चिकित्सा।
सर्वज्ञस्स्वात्मतृप्तस्तदिह न जगतो हेतुरित्यन्धचोद्यं लीलाऽसौ लोकवत्स्यादभिमनिसमये सिद्धितस्त्वाप्तकामः ॥
विश्वं दुःखैकतानं विषममपि सदा निर्मिमाणस्य लीला संजायेतासमञ्जक्रमत इति भवेन्निर्दयत्वादिदोषः।
मैवं बीजाङ्कुरादिक्रमविषमभवानादिकर्मौघभाजां जीवानां सौति तत्तत्फलमिति करुणासाम्ययोरप्रहाणात् ॥१७३॥
दृष्टन्यायेन विश्वप्रजनकचिदचित्तत्त्वभेदप्रकॢप्तौ स्वेष्टप्रत्यर्थिधर्मापनयननियतव्याप्तिवैयाकुली स्यात्।
अत्यन्तादृष्टमर्थं भणितुमधिकृताच्छास्त्रतस्सर्वकर्तुस्सिद्धौ बाधाद्यनर्हप्रमितिपरवती सर्वधर्मोपपत्तिः ॥१७४॥
सांख्यस्मृत्या विरोधाद्विधिमतविहतेः कार्यवैरूप्यतोऽस्मिन्नेकार्थानेकतन्त्रोदितविहततया देहभोगावियुक्त्या।
कार्योपादानभेदात् स्वहितविहतिनः कारकस्तोमहानेः कृत्स्नांशाद्यूहबाधात् कृतिविफलतयाऽप्युत्थितं प्रत्यविद्धयत्॥

इति द्वितीयस्याध्यायस्य प्रथमपादः ॥१॥ अथ द्वितीयस्याध्यायस्य द्वितीयः पादः ॥ २॥

-( रचनानुपपत्त्यधिकरणम् ॥ १ ॥ )- सू० रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च॥ २.२.१.

बाधाभावादकम्पे स्थितवति निगमैर्ब्रह्महेतुत्ववादे भूयः किं वीतरागो वदति परपरीवादमत्रेत्ययुक्तम्।
प्रख्यातप्राच्यनैकप्रतिसमयभवन्मन्दसन्देहशान्त्यै तुल्यत्वभ्रान्तिसिद्धा प्रकरणसमता तर्कपादे हि वार्या ॥१७६॥
षड्विंशालम्बि सांख्यं स्फुटतरपठितं भारते योगतुल्यं तत्स्थत्वात् पञ्चविंशस्त्विति च निगदितस्सर्वतत्त्वान्तरात्मा।
तस्मात् सेशानतन्त्रं श्रुतिसमधिगतं स्थापयित्वाऽथ सूत्रैः पक्षं त्वीशानपेक्षं प्रतिवदति नयैरुत्कटप्रत्यवायम्॥१७७॥

अव्यक्तादीन्पदार्थाननुमितिमुखतस्स्थापयन्तस्स्वबुद्ध्या षट्त्रिंशत्तत्त्ववादप्रभृतिषु न कथं सङ्गमिच्छन्ति सांख्याः ।
तुल्याक्षेपोपपत्तीश्श्रुतिनियतिमुचां कल्पनास्संमृशन्तो दृष्टं नापह्नुवीरन् लघुमनुमिनुयुश्शेषमिच्छन्ति शास्त्रात् ॥ १७८ ॥
कार्यं किंचित्कुविन्दप्रभृतिविरचितं दृश्यतेऽन्यच्च सर्वं कर्त्रायत्तं श्रुतं तत् क्वचिदपि न पराधीनताभङ्गदृष्टिः ।
पङ्ग्वन्धक्षीरपाथस्तृणजलदतटिद्ग्राव्ययस्कान्तपूर्वैः दृष्टान्तैर्न त्वदिष्टं फलति तदखिलं चेतनाधिष्ठितं नः ॥ १७९ ॥
नन्वत्राचेतनानां स्वसमुचितविधौ कर्त्रधीनत्वमुक्तं शास्त्रारम्भे विधातुर्व्यनुददनुमितिं किंपरस्सूत्रकारः ।
पृच्छेयं नातितुच्छा शृणु तदवहितस्सर्वकृत्त्वानुमातुं नापह्नोतुं च शक्यस्तदुभयनियमादर्शनादित्यसंस्त ॥ १८० ॥
सत्त्वाद्यान् द्रव्यभेदांस्त्रिगुणमिति समाहारतः कल्पयन्तस्तेषां नित्यं विभुत्वे समविषमदशाद्यत्र कीदृग्वदेयुः ।
अन्योन्याध्यासक्लृप्तिः प्रकृतिपुरुषयोर्भोगमोक्षोपपत्त्यै च्छायापत्त्यादिनीत्या कथमियमुभयाचेतनत्वे घटेत ॥ १८१ ॥
पुंसां भोगापवर्गप्रभृतिफलमिदं तच्च सर्वं प्रधाने दृष्टत्वादेश्च क्लृप्तः पुरुष इह पृथग्द्रष्टृतादिश्च बुद्धौ ।
मुक्त्यै बद्धस्य शास्त्रं मुनिरकृत तनो नित्यमुक्तोऽस्मि चेत्याद्यन्योन्यव्याहतोक्तिं वृषलपरिणये जैनभक्त्या जपन्तु ॥ १८२ ॥

( अथ महद्दीर्घाधिकरणम् ॥ २ ॥ ) सू०—महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ २. २. १०. ॥

कल्प्योपादानमेकं परममहदधिक्षिप्य नानाविधाणूपादानौघस्य दृष्टात् समधिकवपुषः कल्पनेऽनिष्टमाह ।
प्राज्ञाधिष्ठानशून्यप्रकृतिपरिणतिः प्राङ्निरस्ताऽथ सेशं सूक्ष्माणुद्रव्यमूलद्व्यणुकमुखजगत्सृष्टिपक्षं पिनष्टि ॥ १८३ ॥
प्रागेवारम्भणोक्तावपह्नुतविषया प्रागसद्द्रव्यक्लृप्तिः काणादानामिदानीं क्षिपति बहुमुखं कारणप्रक्रियांशम् ।
त्रेधा हेतौ विभक्ते [ह्य]त्वनुमितिशरणैस्तत्तदंशैर्यथार्हं व्याघातादीन्विकल्पक्रमविविधगतान् व्याहरत्यत्र सूत्रैः ॥ १८४ ॥
दृष्टस्याणोः प्रसूतिं द्व्यणुकमणुमपि स्थापयन्तोऽनुमित्या दृष्टाकारानुसारान्न निरवयवताद्यत्र वक्तुं क्षमेरन् ।
सर्वं सह्येत सूक्ष्मे प्रमितिपरवतां जालकालोकलक्ष्ये तद्भागान् ख्यापयेद्वा स्मृतिरफलतया त्वान्यपर्येण नेया ॥ १८५ ॥
विश्रान्तिर्न क्वचिच्चेदवयवनिवहानन्त्यतो मानसाम्यं माषक्षोणीभृतोस्स्यादिति यदि तदसत्तारतम्यादनन्ते ।
वैषम्यं पक्षमासप्रभृतिषु नियतं न ह्यनन्तेष्वनिष्टं पारार्थ्यं च जात्योर्न किमनुकथितं व्यक्त्यनन्तत्वसाम्ये ॥ १८६ ॥
नादृष्टं किंचिदन्यच्छ्रुतिसरणिजुषां देवतानुग्रहादेरन्यत्वे तस्य तज्ज्ञैरधिकयतनवत् क्लृप्तिराद्ये व्युदस्ता ।
यत्ने यत्नानपेक्षां न किमनुमनुते स्याददृष्टेऽपि तद्वद्भूतस्थादृष्टवादे द्व्यणुकृदणुगतादृष्टकल्पोऽत्र लूनः ॥ १८७ ॥
नित्यं सम्बन्धमेके निजगदुरपृथक्सिद्धसर्वानुवृत्तं नित्यं नित्येष्वनित्येष्वपि कतिचिदिमं तावदायुष्कमाहुः ।
तत्तद्द्वन्द्वस्वभावप्रतिनियतिमुचां स्यान्न तेन व्यवस्था गुर्वी त्वन्यस्य क्लृप्तिः कथमधिकजुषां नानवस्था न दोषः ॥ १८८ ॥
निर्धूते सूत्रकारैरवयविपरमाण्वात्मके द्रव्यवर्गे विश्वं व्याप्त्येकलक्ष्यं परममहदसत् स्यादथाद्रव्यमेव ।
मैवं दृष्टाणुतत्संहतितदुभयसम्बन्धसिद्धेरबाधादागन्तुक्षोणिताद्यैः श्रुतिरपि जगदारम्भणं वर्मणीति ॥ १८९ ॥

( अथ समुदायाधिकरणम् ॥ ३ ॥ ) सू०—समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ २. २. १७. ॥

बाह्योक्ताचारभागश्श्रुतिविहितिवशाज्जैमिनीये निरस्तस्तत्त्वांशं तर्कितं तैः प्रतिवदति गुरुर्जैमिनेरत्र पादे ।
निर्धूते तत्र पूर्वं निरुपधिकनयैर्धवैनाशिकोक्ते पक्षान्वैनाशिकानां जिनगिरिशमतक्षेपतः प्राक् क्षिणोति ॥ १९० ॥

बुद्धोऽसौ स्वावतारैस्सह परिगणितः श्रीधरेण स्वशास्त्रे सर्वज्ञो नैव मुह्येन्न च निखिलसुहृद्विप्रलिप्सेत कंचित् ।
तस्माद्बुद्धोक्तभङ्गे भजति भिदुरतां सात्त्वतादीति चेन्न स्वाभीष्टप्रत्यनीकप्रमथनमनसा मोहनादिप्रवृत्तेः ॥ १९१ ॥
दुर्वारा मोहनेच्छा निखिलजनयितुः केन मोहोऽन्यथा नस्तस्मात्कर्मानुरूपं दिशति फलमसौ तत्त्वबोधं भ्रमं वा ।
स्वोक्त्यादेस्सिद्धमेतन्निरुपधि विषमो नैव तस्मात् समोक्तिः कारुण्याद्विप्रलिप्सा न यदि वृजिनजं नेशनिघ्नं फलं स्यात् ॥
कल्प्यो बोद्धेति सर्वे सुगतमतविदो बोध्यमध्यक्षमेके बुध्याकारानुमेयं कतिचन कतिचिद्बोध्यमिथ्यात्वमाहुः ।
तत्तुल्यन्यायतोऽन्ये धियमपि जगदुः संवृतेरेव सिद्धां तान् सर्वांस्तर्कमानैर्धयति दितिजगुरूनद्य वैभाषिकादीन् ॥ १९३ ॥
एकद्व्यादिस्वभावैर्यदणुभिरथवा तत्तदेकस्वभावैः क्षोणीदेहादिपुञ्जप्रसृतिरिति समाभाषि वैभाषिकेण ।
ज्ञानादानादि तत्र क्षणभिदुरतया बोध्यबुद्ध्योर्न सिद्ध्येन्निर्बाधा प्रत्यभिज्ञाऽप्यनुमितिमथनी शेषमन्यत्र सूक्तम् ॥ १९४ ॥
बोधेप्वाकारभेदं निजमुपरितनेष्वर्पयन् प्राक्तनोऽर्थस्तद्वैचित्र्यानुमेयः क्वचिदपि न तदाध्यक्षतेति प्रजल्पन् ।
प्राक् पश्चाच्च प्रवृत्तेर्विहतिवहुलनां गौरवं च ब्रुवाणैः शिक्षादक्षैस्स्वयूथ्यैर्दमित उपशमं यातु सौत्रान्तिकाख्यः ॥ १९५ ॥

( अथ उपलब्ध्यधिकरणम् ॥ ४ ॥ ) सू०—नाभाव उपलब्धेः ॥ २. २. २७. ॥

न ग्राह्यग्राहकौ स्तः क्वचिदपि विविधानादिसन्तानचित्रो बुद्ध्यात्मा त्र्यात्मकोऽद्य स्फुरति भवदशातिक्रमे स्वात्मनैव ।
योगाचारोक्तिरित्थं विषयविषयिणोर्बोधबाधौ समानौ मन्वानैर्वारणीया स्वपरविभजनाद्यत्र न क्वापि सिद्ध्येत् ॥ १९६ ॥
बुद्ध्यैक्यं बोध्यबोद्ध्रोर्न घटत इह ते सत्ययोरन्ययोर्वा भिन्नत्वे ग्राह्यलक्ष्मक्षतिमभिमनुषे नात्र चित्रैक्यमर्घ्यम् ।
चित्रं द्रव्यं गुणं वा किमपि नच विदुः केऽपि भिन्नैकरूपं तेनात्मख्यातिवादे स्थितिमिह भजतु स्वप्रकाशत्वमात्रे ॥

( अथ सर्वथानुपपत्त्यधिकरणम् ॥ ५ ॥ ) सू०—सर्वथाऽनुपपत्तेश्च ॥ २. २. ३०. ॥

सत्त्वेऽसत्त्वे द्वये च द्वितयपरिहृतावप्यनिष्टप्रसङ्गैस्सर्वं शून्यं चतुष्कोट्यतिगनमिति नामानतस्त्वेष्टवादात् ।
अक्षोभ्यं तत्प्रहाणे परमतमसती संवृतिर्नार्थसिद्ध्यै तस्मादित्थं निषेधो निरुपधिक इह क्वाप्यदृष्टो न कल्प्यः ॥ १९८ ॥
प्राक्पश्चात् सत्त्वहानेर्गगनकुसुमवत् स्यान्न मध्येऽपि कार्यं मैवं तत्रैव दृष्टेर्न यदि कथमसौ मध्यकार्यादिशब्दः ।
कार्यारम्भे निदानं विकृतिमदुत नेत्यादिचिन्ताऽपि वन्ध्या सामग्र्या कार्यसिद्धेर्भजति च गुणतां कारणस्थानवस्था ॥
साध्यं हेतुस्तदङ्गप्रभृति च यदि वस्संवृतेरेव सिध्येदसद्वाक्यानुरोधादिह न कथमसिद्ध्यादिदोषा भवेयुः ।
तत्र प्रामाण्यबुद्धिर्न यदि पठत तन्मानमित्यस्मदुक्तिं वस्तुस्थित्या न मानं तदिति यदि समं त्वन्मतस्थापकेऽपि ॥ २०० ॥
अख्यातिस्त्वन्यथाधीर्विषयरहितधीस्साऽनधिष्ठानबुद्धिर्बाह्यार्थाकारयोगस्सदसदितरधीश्शून्यधीरात्मधीश्च ।
भ्रान्तौ सर्वत्र तत्तत्परमतकथकैरादृताः पक्षभेदाः प्रायो बुद्धिर्यथार्था श्रुतिविदभिमता क्वापि भेदाग्रहादि ॥ २०१ ॥

( अथ एकस्मिन्नसंभवाधिकरणम् ॥ ६ ॥ ) सू०—नैकस्मिन्नसंभवात् ॥ २. २. ३१. ॥

संवादात् क्वापि भागे जिनमुनिवचसश्शेषमप्यस्तु मानं तस्मात्तेनोपरोध्योपनिषदिति कचोल्लुञ्छनानां दुराशा ।
वैषम्यस्यापि दृष्टेर्न यदि सुगतवागेवमेवास्तु सत्या तेनान्योन्यं निरोधात् पुरुषवचनयोरप्रकम्प्या श्रुतिर्नः ॥ २०२ ॥
सच्चासच्च द्वयं च द्वितयसमधिकं तच्च पूर्वैस्सहेति स्यादस्तीत्यादिवाचा परिहितगगनैर्गीयते सप्तभङ्गी ।
व्याघातस्तैर्यदीष्टस्स्वसमयविहतिर्यद्यनिष्टः परोक्तैस्तद्वाक्यैर्न क्षतिस्स्यान्न च निरुपधिकः क्वाप्यसत्त्वादियोगः ॥ २०३ ॥

वृद्धिह्रासौ यथार्हं प्रतितनु भविनां देहभङ्गे विमानं मुक्तौ नित्योर्ध्वयानप्रभृति गुरुतया नित्यपातं क्षमादेः ।
धर्मादेर्व्यापकत्वं गगनवदथवा तादृशं पुद्गलत्वं दुस्तर्कैः कल्पयन्तश्श्रुतिनयकुशलैर्दूरमुत्सारणीयाः ॥ २०४ ॥

( अथ पशुपत्यधिकरणम् ॥ ७ ॥ ) सू० पत्युरसामञ्जस्यात् ॥ २. २. ३१. ॥

सर्वं जानाति रुद्रश्श्रुतिषु च महितस्सत्यवादी च दृष्टः प्रख्यातं तद्व्रतं च क्वचिदुपनिषदीत्यम्नु मानं तदुक्तिः ।
मैवं देवेन दैत्यप्रमथनरुचिना मोहशास्त्राणि कुर्वित्यादिष्टो ह्येष तन्त्रं निजमकृत ततस्तन्न शिष्टोपजीव्यम् ॥ २०५ ॥
प्राजापत्ये हि वाक्ये प्रकटमुपनिषत् प्राह देहात्मवादं चक्रे लोकायतं तत् सुरगुरुरभजन्मोहनत्वं मुकुन्दः ।
कण्वस्थाने च लौकायतिकपरिवृढा भारतेऽपि प्रगीताः कार्यार्थं विप्रलम्भस्तदिह पशुपतेस्तद्वदेवोपपन्नः ॥ २०६ ॥
शैवाद्याख्याविशेषैः पशुपतिसमयस्स्याच्चतुर्धाऽन्यथा वा श्रुत्याऽन्योन्यं च बाधस्स्फुट इह तदसौ शापदुष्टाहे उक्तः ।
अग्राह्यान् वैदिकानामनुसृतनिगमास्ससरस्तत्प्रविष्टान् तत्त्वेऽप्यत्रान्यथात्वं सुगतजिनमतानन्तरोक्तिः क्रमाप्ता ॥ २०७ ॥
निष्ठा सर्वेषु नारायण इति वचनाद्धेत्वहन्तव्यतोक्तेर्मानत्वोक्त्या च तन्त्रान्तरमपि महितं वेदवद्भारतादौ ।
नातो बौद्धादिवत्तन्निरसनमिति चेत् सत्यमंशे तु बाधस्यान्नासौ पञ्चरात्रे क्वचिदपि तदिह स्वीकृतिर्वेदतुल्या ॥ २०८ ॥
दृश्यन्ते संगृहीता जगति हि समयास्ते च राज्ञाऽनुपाल्यास्तस्मान्नः पक्षपातः क्वचिदनुचित इत्यर्भकप्रायचोद्यम् ।
मुख्यैरन्ये गृहीता भवतु समयसंरक्षणोक्तिश्च धर्म्ये निष्ठैक्योक्तिस्तदन्यग्रहविहतिपरा तद्विरुद्धोक्तिदृष्टेः ॥ २०९ ॥

( अथ उत्पत्त्यसंभवाधिकरणम् ॥ ८ ॥ ) सू० उत्पत्त्यसंभवात् ॥ २. २. ३९. ॥

प्रामाण्यं कर्मकाण्डस्मृतिनयवशतस्सात्त्वतस्यापि सिद्धं पादेऽस्मिन् संगतिश्च प्रतिमतदमने नास्त्यमुष्येति चेन्न ।
प्रत्यर्थित्वं विरोधभ्रममपनयता पञ्चरात्रस्य वार्यं दुस्तर्काद्युत्थितोक्त्या तदितरसमयेष्वित्यनुस्मृतसिद्धिः ॥ २१० ॥
दृष्टाऽस्मिन्वेदनिन्देत्यनभिमतमृषेस्सात्त्वते वैदिकत्वं मैवं वैशद्यमूलस्तुतिपरवचने वेदवैरस्यहानेः ।
संगृह्याम्नायसारं प्रणयति भगवांस्तद्धि भक्तानुकम्पी श्रौतस्मार्तादिवच्च व्यभजदिह विभुर्वैदिकं तान्त्रिकं च ॥ २११ ॥
वेदानां मानतोक्तेस्तदनुसरणतस्स्वस्य तन्मूलतोक्त्या व्यावृत्तिर्भाति बाह्यागमत इति न तत्तुल्यभावोक्तिरार्षी ।
का हानिः क्षुद्रविद्याशबलमिति यथा तादृशे वेदभागे मोक्षस्य प्रत्ययार्थं त्वगणिषत परं सात्त्वते सिद्धिभेदाः ॥ २१२ ॥
जीवस्योत्पत्तिमाह प्रथयति च मनो जीवतत्त्वप्रसूतं तच्चाहङ्कारहेतुं व्यपदिशति ततः पञ्चरात्रं न मानम् ।
मैवं जीवादिवाचो ह्यभिदधति विभोर्व्यूहभेदानिह त्रींस्तत्तत्तत्त्वाभिमानान्नियतिमधिगता तेषु तत्तत्समाख्या ॥ २१३ ॥
जीवोऽत्रानाद्यनन्तः कथित इ[ह]ति तदुत्पत्तिपक्षो न हीष्टश्शब्दस्संकर्षणादिर्न कथमपि समन्वेति जीवादिमात्रे ।
श्रौतस्सृष्टिक्रमश्च स्वयमनुपठितस्तद्विरुद्धं न कल्प्यं तस्माच्छ्रुत्या मिथो वा न विहतिरिह तत्तन्त्रतात्पर्यदृष्टेः ॥ २१४ ॥
सांख्या वैशेषिकाश्च श्रुतिपरिपठितं धर्मैश्चेच्छन्न तत्त्वं तत्त्वाचारौ तु बुद्धक्षपणकपशुपत्युक्तिषु श्रुत्यपेतौ ।
वेदोपस्कारिविष्णुस्मृतिवदवितथे पञ्चरात्राख्यतन्त्रे तत्त्वं त्रय्यन्तसिद्धं चरणमपि समं गृह्यभेदादिनीत्या ॥ २१५ ॥
स्मर्यन्ते पञ्चयज्ञा मुनिभिरपि नमस्कारमन्त्रेण शूद्रे तत्राधीतं हविष्कृत्प्रभृतिपदमिहाप्यंशतोऽस्याधिकारः ।
योज्या दक्षोक्तकालक्रमगतिरभिगत्यादिभेदे तदुक्ते ग्राह्यं पश्चिष्टिसोमप्रभृतिवदखिलं युक्तितस्सङ्कलय्य ॥ २१६ ॥
जातावाचार्यशब्दः क्वचिदिति न तथाऽऽचार्यदेवो भवेत्याद्याम्नाते बह्वप्रतीतिस्स्मृतिषु नियमितालक्षणात्तत्प्रवृत्तेः ।

तद्वत् स्यात् सात्त्वतादावगतिकविषये रूढिभङ्गो न दोषो विप्रादेरत्र शास्त्रे स्थितिरपि बहुधा भारतादौ प्रसिद्धा ॥२१७॥

योगास्साङ्ख्यव्युदासात् कणचरदमनादक्षपादानुयाता बौद्धोन्माथेन लोकायतमुषितधियो जैनभङ्गात्तदुत्थाः ।
पत्युस्तन्त्रे पशूनां प्रकटितविहतौ तादृशापष्टुनिष्ठा ध्वस्तास्तत्तुल्यतर्कागमशरणतया साकमस्मिन् कुदृग्भिः ॥ २१८ ॥

पादेऽस्मिन् कापिलस्थैः कणभुगनुगतैर्वृद्धवैभाषिकाद्यैर्योगाचाराभिधानैस्सुगतमतरहश्शून्यवादप्रसक्तैः ।
अर्हत्सिद्धान्तभक्तैः पशुपतिसमयस्थायिभिश्चोपरोधं क्षिप्त्वाऽथो पञ्चरात्रे श्रुतिपथमवदत् पञ्चमाम्नायदर्शी ॥ २१९ ॥

॥ इति द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥ अथ द्वितीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

सर्वं साङ्ख्यास्तु नित्यं क्षणिकमखिलमप्यत्र वैभाषिकाद्या नित्यानित्यं समस्तं जिनपरिपठितां सप्तभङ्गीं पठन्तः ।
नित्यानित्ये विभज्याप्यभिदधति विपर्यस्य वैशेषिकाद्यास्त्युत्थांस्तान् निरुन्धन् श्रुतिभिरथ वियत्प्राणपादौ युनक्ति ॥

( वियदधिकरणम् ॥ १ ॥ ) सू०—न वियदश्रुतेः ॥ २. ३. १. ॥

पूर्वत्राधिक्रियायां पुरुषजनिवचोनित्यतोक्त्या निरुद्धं व्योमोत्पत्तौ तथैव स्थितिरिरिति वचसोर्व्याहतौ वक्ति कश्चित् ।
सिद्धान्ती व्योमसृष्टिर्निगमशतमिता नान्यथासिद्धिरस्यां वायुव्योमामृतोक्तिर्जनिविधिविहतेत्युक्तिवैषम्यमाह ॥ २२१ ॥

तेजःप्राथम्यदृष्टेरमृतवचनतोऽनंशकद्रव्यभावाद्व्योमन्युत्पत्तिवाक् स्यादुपहितविषयैवात्मनीवेति चेन्न ।
प्राथम्यस्याश्रुतत्वात् प्रथमपठनतः कल्पनेऽन्येन बाधात् किंचामर्त्योक्तितुल्यं त्वमृतपदमिहानेकवाक्यैककण्ठ्यात् ॥

यौक्तस्सत्कार्यवादः श्रुतिभिर[भि]नुमतो नावयव्यस्ति सृज्यस्तत्तद्द्रव्येषु नामान्तरभजनसहावस्थया सृष्टिवादः ।
इष्टाश्शब्दाद्यवस्थास्तव निरवयवद्रव्यवर्गेऽपि तस्मात् व्योमन्युत्पत्तिरुक्ता श्रुतिषु तदितरोत्पत्तितुल्या न बाध्या ॥ २२३ ॥

( अथ तेजोधिकरणम् ॥ २ ॥ ) सू०—तेजोऽतस्तथा ह्याह ॥ २. ३. १०. ॥

कूटस्थाद्ब्रह्मणस्स्याज्जगदखिलमिदं पुत्रपौत्रादिनीतेरेतस्मात् प्राण इत्याद्यपि युगपदिहेत्यादिरूढोऽत्र मोहः ।
प्राणस्वान्तादिपाठक्रमत इतरसंक्षोभणेऽतिप्रसङ्गादीक्षानुस्मृतिदृष्टेः प्रथममिव परं सौति तत्तच्छरीरम् ॥ २२४ ॥

( अथ आत्माधिकरणम् ॥ ३ ॥ ) सू०—नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ २. ३. १८. ॥

द्रव्यं सर्वं हि नित्यं कथितमवयविद्रव्यभङ्गेन पूर्वं नित्यत्वं सूत्रकारः पुनरपि पुरुषे किं विशिष्याभिधत्ते ।
सत्यं नामान्तरार्हामिह नुदति दशां चेतनस्यानुपाधेः प्रत्यक्त्वज्ञत्वधर्मौ तदिह नियमितौ शाश्वतौ क्षेत्रिणोऽपि ॥ २२५ ॥

सच्छब्दार्थातिरिक्तं जनिमदखिलमित्यैतदात्म्यादिसिद्धं प्रोक्ता सृष्टिश्च जीवे निरवयवनयस्त्वम्बरादौ निरस्तः ।
जीवोत्पत्तिस्ततस्स्यादिति न सदकृताभ्यागमादिप्रसङ्गान्नित्यत्वाजत्वकण्ठोक्तिभिरपि जननं त्वस्य देहादियोगः ॥ २२६ ॥

देहात्मत्वे जनिस्स्यान्न तदिह घटते जातमात्रस्य रागात् ज्ञाने किण्वादिमेवोपलशबलपटप्रक्रियाऽप्यत्र दुःस्था ।
देहे गेहादितुल्या ममकृतिरनघा दोषतस्त्वैक्यमोहः क्षिप्तं चैक्यानुमानं बलवदनुमितेश्शास्त्रतस्तर्कतश्च ॥ २२७ ॥

देहे देहातिरेके तदवधिनियतप्राणबुद्ध्यक्षरूपं धीसन्तानं च नित्यं प्रलयविलयिनं स्थास्नुमप्यापवर्गात् ।
डिण्डीराभं सदध्यावितथविकृतौ जीवमिच्छन्त इत्थं निर्धूता दूरमत्र श्रुतिभिरितरवद्बाधदोषोज्झिताभिः ॥ २२८ ॥

( अथ ज्ञाधिकरणम् ॥ ४ ॥ ) सू०—ज्ञोऽत एव ॥ २. ३. १९. ॥

कैश्चिज्ज्ञानत्वमात्रं कथितमुपधिजा ज्ञातृतैवात्मनोऽन्यैस्तत्राम्नायादिबाधं प्रथयति विविधं ज्ञोऽत इत्यादिसूत्रैः ।

पूर्वन्यायादमुष्मिञ्ज्ञनिलयरहिते नित्यबोधेऽत्र चोक्ते सङ्कोचाद्यर्हबुद्धेर्विकृतिवचनमप्यस्य सद्वारकं स्यात् ॥ २२९ ॥
ज्ञातृत्वं ज्ञानता च श्रुतिभिरभिदधे नात्र पक्षे पतामस्सर्वत्रात्मा न भायात् किमिति न निगमैर्देहिनोऽणुत्वसिद्धेः ।
स्वाभासैकस्वमूर्तेरविशदमहमस्सर्वदा भानमिष्टं धीसङ्कोचात् सुषुप्तिप्रभृतिषु विशदोल्लेखमात्रोपरोधः ॥ २३० ॥
धर्मस्थे त्वेवकारे त्रिविधमपि भवेत्तद्व्यवच्छेदकत्वं धर्मिण्यस्यान्वये स्यात्तदितरविषये तस्य धर्मस्य हानिः ।
जानात्येवेत्यबोद्धा न भवति जडता ज्ञानमात्रोक्तिवार्या ज्ञानालोपादिवाक्यानुगुणविषयतां यात्यसावेवकारः ॥ २३१ ॥
उत्क्रान्तिस्पन्दनाणूपमितिवचनतोऽर्णायमस्त्वशक्तिलाभे धीभूम्ना यौगपद्यं त्ववयवनयनोऽनेकनूर्निग्रहेऽपि ।
यत्राम्नातं विभुत्वं परविषयमिदं भाति तात्पर्यलिङ्गैर्जीवे व्यापित्ववादो मतिमहिमपरस्स्वच्छताद्याशयो वा ॥ २३२ ॥

( अथ कर्त्रधिकरणम् ॥ ५ ॥ ) सू०—कर्ता शास्त्रार्थवत्त्वात् ॥ २. ३. ३३. ॥

ज्ञातृत्वं पुंस इत्थं भवतु तदपि नामुष्य कर्तृत्वमिष्टं श्रुत्याद्यैस्तन्निषेधाद्विकृतिविरहतश्चेत्यसद्दृष्टबाधात् ।
कर्तृत्वापह्नवोक्तेरविकृतिवचसोऽप्यान्यपर्यं हि गीतं कर्ता शास्त्रार्थवत्त्वात्तदयमिह न च स्यादबोद्धुर्नियोगः ॥ २३३ ॥
किंच स्वोक्त्यादिभग्नो निगदितुरहमः कर्तृताया निषेधो यद्यन्यस्याहमर्थात्तदिदमुपनिषद्भेदिनस्सिद्धसाध्यम् ।
भोक्तृत्वस्याप्यभावं प्रसजति वितथं बन्धमोक्षादिशास्त्रं प्राणादानाद्विहारात् प्रकृतिसमधिकोऽस्मीति योगाच्च कर्ता ॥
व्यापारज्ञानवाञ्छाप्रशकनयननायोगयुक्तिस्तु मन्दा कार्ये सामग्र्यपेक्षे विधितदितरयोर्लोकसिद्धा प्रवृत्तिः ।
सार्थं शास्त्रं हितोक्त्या नियतिनियमिता शास्त्रयोग्या दशा सा ज्ञाता कर्ता च भोक्ता तदयमिह पुमान् भाति सर्वैः प्रमाणैः ॥

( अथ परायत्ताधिकरणम् ॥ ६ ॥ ) सू०—परात्तु तच्छ्रुतेः ॥ २. ३. ४०. ॥

कर्ता न ह्यन्यतन्त्रस्सरति खलु तथा पाणिनिश्चान्यथा चेत् आज्ञा कुर्यान्न कुर्यादिति तु निगलिते धावनादेशवत् स्यात् ।
मैवं कर्माक्षकालप्रकृतिपरवशो कर्तृतां तत्फलं च स्वीकृत्यात्मेशमात्रे श्रुतिशतविदिते द्वेष इत्थं दुरन्तः ॥ २३६ ॥
साधारण्येन हेतुस्सलिलमिव विभुस्सर्वकार्याङ्कुराणां वैषम्यं त्वाविरिञ्चात् प्रतिनियतफलैः प्राणिनां कर्मबीजैः ।
साम्यं स्वस्य स्वगीतं श्रुतमपि तदिहाधोनिनीषादिभेदस्तादृक्कर्मानुरूपं फलमिति नियतोऽनादिरेष प्रवाहः ॥ २३७ ॥
काले दुःखोपशान्तिं जनयति भगवान् व्याजमात्रावलम्बी या दुःखापाचिकीर्षा परहितमनसस्सैव तस्यानुकम्पा ।
दत्ते देहादियोगं दिशति च निगमं वक्ति वेदान्तसारं निस्सीमानन्दयोगं निरुपधि समये सौति पुंसां तयैव ॥ २३८ ॥
दोषस्यानिग्रहांशो यमयितुरिति चेन्नोपमर्दासहत्वात् स्यानिष्टं नेश्वरे हि प्रसजति न परानिष्टमस्य प्रतीपम् ।
कारुण्यं सावकाशं क्वचिदिति कथितं साक्षिताद्यं च सुस्थं दृष्टे चैतत्स्वभावे फलत इति धिया युज्यते तत्प्रपत्तिः ॥ २३९ ॥
प्रत्यङ्ङात्माऽहमर्थः प्रमितिपरवतां कर्तृतादिश्च तस्मिन् स्वेच्छापूर्वप्रवृत्तेरयमचिदधिकस्तावदीशानतुल्यः ।
ईशस्तु स्वेच्छयैव प्रयतत इति तन्निघ्नमन्यत्समस्तं सारथ्यादिक्रमेण प्रतिनियतगतिस्स्यात् त्रयाणां प्रवृत्तिः ॥ २४० ॥
कर्तृत्वं स्यात्कदाचित् करणवति परप्रेरणानिर्व्यपेक्षं नोचेत्तन्निग्रहाद्यं कथमिति यदि न स्वेष्टपक्षेऽपि साम्यात् ।
स्वेनापथ्यप्रवृत्तं नहि पुनरपि तत् कारयेयुर्दयार्द्रास्तच्चेत्तस्य स्वभावादितरदपि न किं निष्फलोऽधीतभङ्गः ॥ २४१ ॥
क्षेत्रज्ञानां समानां विषमयतनता तादृशादृष्टभेदात्तादृष्टं त्वन्यदिष्टं नियमनभिदया शासितुस्तत्र भाव्यम् ।
साक्षित्वाद्यश्च नेतुस्समनिगममितं प्रेरकत्वं न रुन्धे भाष्यादिग्रन्थलेशोऽप्यवहितमनसामैदमर्थ्यं भजेत ॥ २४२ ॥

कर्ता देवः फलानां न तु करणभूतः प्रेरकश्चेत्ययुक्तं सर्वश्रुत्यादिकोपान्न भवति न फलं कर्मणः पापचर्या ।
कर्माधीनं तु चिन्ताद्यपि हि भवभृतो भाषितं भाष्यकारैर्जन्तूनां देवतानामपि करणगणाधिष्ठितं वक्ष्यतीत्थम् ॥ २४३ ॥

( अथ अंशाधिकरणम् ॥ ७ ॥ ) सू०—अंशो........दाशकितवादित्वमधीयत एके ॥ २. ३. ४२. ॥

जीवादत्यन्तभिन्नः पर इति बहुधा व्याहरत् सूत्रकारो भेदाभेदश्रुतीनां घटकनियमतश्शात्रवं च व्यपोढम् ।
उक्ताक्षेपे समाधावपि न समधिको हेतुरत्रास्ति सत्यं पादांशाद्युक्तिमुह्यद्बहुकुमतिमतक्षिप्तये त्वंशचिन्ता ॥ २४४ ॥
अंशत्वं रामकृष्णप्रभृतिषु घटतां विग्रहांशावताराज्जीवे ब्रह्मांशतोक्तिर्न तु निरवयवं ब्रह्म वक्तुर्घटेत ।
ब्रह्मातश्चित्समष्टिः प्रतिपुरुषमिह त्वंशता चेत्ययुक्तं विश्वस्रष्टुर्बहु स्यामिति बहुभवनध्यातुरेकत्वसिद्धेः ॥ २४५ ॥
व्योमैकं स्याद्घटाद्यैः पृथगुपधिगणैर्ब्रह्म बह्वंशमेवं तत्रोपाधिव्यपाये भवभृदयमियाद्ब्रह्मतामित्ययुक्तम् ।
स्वानर्थारम्भदौस्थ्यात् प्रतिनियतगुणप्रत्यभिज्ञाद्यदृष्टेश्छिन्नाच्छिन्नांशचिन्तोदितबहुविहतेस्साम्यशब्दाच्च मुक्तौ ॥ २४६ ॥
मायोदन्वत्यपारे प्रतिफलति मृषावीचिषु ब्रह्मचन्द्रच्छायांशास्तस्य जीवा इति कतिचिदुशन्त्येतदुन्मत्तगीतम् ।
न ब्रह्मद्रष्टृतैषामचिदपि हि तथा स्वेन कल्प्यो न जीवः क्लृप्तेः प्राक् स्वात्महानेस्त्रितयसमधिकः कल्पकस्तत्र मृग्यः ॥
सन्मात्रं ब्रह्म सर्वानुगतमिह पुनर्नित्यसिद्धास्त्रयोंऽशा जीवेशाचित्प्रभेदादिति च कतिचनेदं च नोदञ्चनीयम् ।
सत्तामात्रानुवृत्तेस्तदधिकवपुषश्शासितुर्ब्रह्मतोक्तेर्ब्रह्मत्रैविध्यवाक्यं निरवयवनया निश्चितेऽन्याशयं स्यात् ॥ २४८ ॥
मेरोरंशः किरीटप्रभृतिरिति नयान्नित्यभिन्नेंऽशतोक्तिस्साजात्याल्पत्वमूला गमयितुमुचितेत्यागमासन्नपक्षे ।
अंशोक्तिस्स्यादमुख्या स हि निपुणधियामेकवस्त्वेकदेशस्तस्माज्जीवो विशिष्टे भगवति गुणवत्तत्प्रकारोंश उक्तः ॥ २४९ ॥
उक्तं नित्योपलब्धिप्रभृति परमते पूर्वमेव ह्यनिष्टं भूयस्तादृक्प्रसङ्गः प्रकथित इह किं भोगसङ्कीर्णतादेः ।
मैवं पूर्वं हि बाह्यप्रसृतिमशमयत्साम्प्रतं ब्रह्मवादव्याजोत्सिक्तान् कुदृष्टीन् परिहृतिरिति च स्याद्विषयस्तेषु ॥ २५० ॥
मिथ्याज्ञानादिचक्रे मरुति भगणवद्घूर्णमानस्य जन्तोः प्रत्यक्तत्त्वप्रबोधाद्भवपरिहरणं सर्वतन्त्राविगीतं ।
शुद्धात्मज्ञानगर्भां परभजनभिदामङ्गभेदांश्च वक्ष्यन्मीमांसारम्भसिध्यद्वपुषमपि पुनश्शोधयामास जीवम् ॥ २५१ ॥
क्लृप्तिर्व्योमादिकेऽपि क्रमभुवि च विभोः प्राच्यतत्त्वैर्विशिष्टाज्जीवस्यौपाधिकौ तु प्रजननविलयौ चिद्घनज्ञातृताऽस्य ।
कर्तृत्वं पारतन्त्र्यं गुणतनुनयतो विश्वरूपांशता चेत्याम्नायान्योन्यबाधव्यपनयनवियत्पादसाध्यानि सप्त ॥ २५२ ॥

॥ इति द्वितीयाध्यायस्य तृतीयः पादः ॥ ३ ॥ अथ द्वितीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥

अक्षाद्युत्पत्त्यनुक्तौ न हि फलमधिकाशङ्कनं त्वत्र मन्दं तत्सङ्ख्यादेः परीक्षाऽप्यनुकृतबलिभुग्दन्तचिन्तेति चेन्न ।
एतेष्वब्रह्मकार्यं किमपि कथयतां बाधनेनार्थवत्त्वात्तत्साक्षात्सङ्गतिस्स्यात् प्रथमचरमयोर्मध्यमानां प्रसङ्गात् ॥ २५३ ॥
अष्टावत्राधिकाराः प्रथममिह वियन्नीतिरुक्तेन्द्रियाणां तेजोबन्नोक्तनीतिं द्रढयति चरमे व्यष्टिभेदस्य सृष्टौ ।
सङ्ख्यामानादिचिन्तास्वपि तदुपहितोपासनाद्यैः फलं स्यात् प्राणादिभ्यः प्रमाता पृथगिति विशदीकर्तुमप्येष पादः ॥ २५४

( अथ प्राणोत्पत्त्यधिकरणम् ॥ १ ॥ ) सू०—तथा प्राणाः ॥ २. ४. १. ॥

अग्रे सत्तामृषीणां श्रुतिरभिदधती प्राणतां वक्ति तेषां नात्र ब्रह्मैव वाच्यं बहुवचनहतेस्तेन नित्याक्षसिद्धिः ।
मैवं तत्सृष्टिदार्ढ्याद्बहुवचनमिदं पाशनीत्यैव नेयं प्राणर्षित्वे परात्मन्यपि हि सुघटिते तन्निरुक्त्यादिसाम्यात् ॥ २५५ ॥

( अथ सप्तगत्यधिकरणम् ॥ २ ॥ ) सू०—सप्तगतेर्विशेषितत्वाच्च ॥ २. ४. ४. ॥

सप्त प्राणाश्चरन्तीत्युदितमभिहितास्ते विशिष्यापि योगे तस्मात् सप्तेन्द्रियाणीत्यसदधिकवचोदृष्टितोऽत्रान्यपर्यात् ।
लक्ष्मैषां सात्त्विकाहंकरणपरिणतद्रव्यता चाविशिष्टा भेदेनोक्तिः प्रधाने मनसि फलवती कर्मबोधेन्द्रियेभ्यः ॥ २५६ ॥

देहव्याप्येकमक्षं कतिचिदकथयन् भागतो भिन्नकृत्यं केचित् कर्मेन्द्रियाणि श्रुतिपथविमुखास्तत्यजुः क्षुद्रतर्कैः ।
क्षेत्रज्ञस्याहुरेके सहकरणगणं बुद्ध्यहङ्कारचित्तैरन्ये तं चित्तवर्जं निजगदुरिति तानर्थतोऽत्र व्युदास ॥ २५७ ॥

( अथ प्राणाणुत्वाधिकरणम् ॥ ३ ॥ ) सू०—अणवश्च ॥ २. ४. ६. ॥

सर्वेष्वानन्त्यवादात् परिमितिनियमानुक्तितश्चेन्द्रियाणां व्याप्तिस्सिद्धेति चेन्न प्रयदखिलतनूत्क्रान्तिगत्यागतिभ्यः ।
वृत्त्या दूरस्थधीस्स्याद्भजनविधिपरेऽनन्ततोक्तिस्स्वकार्यैः कन्दस्थानां च तत्तत्तनुषु विकृतिमद्द्रव्यभावात् पृथुत्वम् ॥ २५८ ॥

( अथ वायुक्रियाधिकरणम् ॥ ४ ॥ ) सू—न वायुक्रिये पृथगुपदेशात् ॥ २. ४. ८. ॥

प्राणः प्रागुक्तनीत्या परजनित इति स्थापितो वायुमात्रं देहान्तस्तत्क्रिया वा स इति न पृथगुत्पत्तिवादात् सहास्य ।
द्रव्यत्वं द्रव्यवर्गे पठनत उचितं नैष तत्त्वान्तरं स्यात्तेजस्त्वे वाय्ववस्थात्यजनवदिह तत्त्यागहानेः कदाऽपि ॥ २५९ ॥

( अथ श्रेष्ठाणुत्वाधिकरणम् ॥ ५ ॥ ) सू०—अणुश्च ॥ २. ४. १२. ॥

उक्तः प्राणस्त्रिलोक्या सम इति स जगद्व्यापकोऽस्त्वित्ययुक्तं जीवाक्षन्यायतस्तत्सहपठिततदुत्क्रान्तिगत्याद्यबाधात् ।
स्तुत्यर्था सर्वसाम्यश्रुतिरिह करणक्षेत्रधृत्यादिहेतौ देहेऽनल्पोपकारस्स्फुरति च दशधा वृत्तिभेदैर्विभक्तः ॥ २६० ॥

( अथ ज्योतिराद्यधिष्ठानाधिकरणम् ॥ ६ ॥ ) सू०—ज्योतिराद्यधिष्ठानं तु तदामननात्प्राणवता शब्दात् ॥ २.४.१३. ॥

भोक्तॄणां देवतानामपि तनुकरणाधिष्ठितिर्नैशतन्त्रा तत्स्वातन्त्र्यप्रदानादिति न तनुभृतस्तच्छरीरं हि सर्वे ।
नित्ये तत्पारतन्त्र्ये क्वचिदपि न भवेद्राजसामन्तनीतिः प्राणन्यायात् प्रभुत्वं तदिह परवशं चेतनानां स्वशक्त्ये ॥ २६१ ॥

( अथ इन्द्रियाधिकरणम् ॥ ७ ॥ ) सू०—त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ २. ४. १५. ॥

प्राणोऽपि स्याद्धृषीकं भृशमुपकरणात्तेषु मुख्यत्ववादादुत्क्रान्त्यादौ च साम्यादिति यदि न पृथक्शब्द[नै]तस्तस्य भेदात् ।
कण्ठोक्तादिन्द्रियत्वान्मनसि तु घटते गोबलीवर्दनीतिर्न प्राणे सात्त्विकाहङ्करणविकृतिता शब्दसाम्यादि मन्दम् ॥ २६२ ॥

( अथ संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ८ ॥ ) सू०—संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २. ४. १७. ॥

मन्वाद्यैस्स्मर्यतेऽसौ सरसिजवसतिर्व्यष्टिनामादिकर्ता जीवेनानुप्रविश्येत्यपि कथितमतः प्रेष्यकृत्यक्रमोऽत्र ।
तत्रैको हि प्रवेष्टा त्रिवृतमकृत च व्याकरोदित्यधीतस्तत्तज्जीवान्तरात्मा सृजति स भगवांस्तादृशं कार्यजातम् ॥ २६३ ॥

या जीवेनात्मनेति श्रुतिरियमपि न ब्रह्मजीवैक्यमाह प्रागेवैकोऽन्तरात्मा वपुरितरदिति स्थायिभेदाभिधानात् ।
तेनेशस्तद्विशिष्टस्स्वकरणकतयाऽनुप्रवेशेऽपि कर्ता जीवे तत्कर्तृतायामिह न हि घटते त्वाश्रुतिः कर्तृभेदात् ॥ २६४ ॥

अग्न्यादावण्डमध्यस्थितिमति कथितं रूपभेदैस्त्रिवृत्त्वं तेजोबन्नाशितोक्तावपि विशदमिदं तेन वेधास्त्रिवृत्कृत् ।
मैवं ब्रह्माण्डसृष्टिर्भवतु कथमसावत्रिवृत्कारपूर्वा भुक्तेऽन्नादौ त्रिधोक्ता परिणतिरितरत् सन्निकृष्टेः प्रदृष्टिः ॥ २६५ ॥

अक्षाणां जन्मसंख्यापरिमितय इह प्राणवायोस्स्वरूपं तत्सौक्ष्म्यं देवतादेस्तदुभयविषयाधिष्ठितौ पारतन्त्र्यम् ।

प्राणस्यानिन्द्रियत्वं बहुविधचिदचिद्व्यष्टिनामादि चाद्यात्पञ्चीकर्तुः स्वनाभिप्रभवकवचितादूचिरे प्राणपादे ॥ २६६ ॥
नित्यत्वं व्योम्नि वाताद्यणुषु च पुरुषेऽप्यज्ञतादीनपार्थान् श्रोत्रादौ भूतताद्यं मनसि च विभुतां नित्यतत्त्वान्तरत्वम् ।
प्राणेष्वात्मादिभावं स्वपदनियमनस्वैरितां स्वर्गिबृन्दे वेधस्युन्मुक्तयन्त्रक्रममपि वदतां पादयुग्मेऽत्र भङ्गः ॥ २६७ ॥
तर्कैरापातसत्यैरविहतिकथने व्याहतिः स्थापिता स्यात् सम्यग्भिर्वस्तुगत्या तदिति यदि तदा स्वाभिमानोपरोधः ।
तेनाद्ध्यायो विरोधप्रशमनकृदसौ बौद्धबन्धोर्विरुद्धस्सौत्री तर्काप्रतिष्ठा श्रुतिपथविमुखस्वैरवादेषु योज्या ॥ २६८ ॥

॥ समाप्तः द्वितीयाध्यायः ॥

---

॥ अथ तृतीयाध्यायस्य प्रथमः पादः ॥ १ ॥

साध्या मुक्तिर्न चेत्स्यात्प्रसजति विफला साधनाध्यायक्लृप्तिस्साध्या चेन्नश्वरी स्यात् कथमिह पुनरावृत्तिशून्योऽपवर्गः ।
मैवं ब्रह्मानुभूतिः परभजनवता प्रागसिद्धैव साध्या धीमङ्कोचप्रणाशस्त्वियमिति च भवत्युत्तराव्यतीता ॥ २६९ ॥
पादाभ्यामत्र पूर्वं जनयति भविनां ब्रह्मविद्याधिकारं पश्चात्तेषामुभाभ्यां वदति बहुविधां नामशेषैस्सहाङ्गैः ।
ऐश्वर्यादौ विरक्तिं निरवधिविभवे पूरुषे चाभिलापं विद्याभेदावलम्ब्यं तदुपकरणमप्याह पादैः क्रमेण ॥ २७० ॥
संसारोद्विग्नचेतास्तनुभृदधिकरोत्यत्र शारीरकांशे वैराग्यार्थस्तु पादः किमिति पुनरसौ सूत्रकारैर्निबद्धः ।
सत्यं प्राप्यान्तराणां निरयगणतुलारोपणं मुक्त्युपायप्रारम्भेऽभ्यर्हितं स्यात्त्वरत इह खलु स्पष्टदृष्टस्वबोधः ॥ २७१ ॥

( अथ तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥ ) सू०—तदन्तरप्रतिपत्तौ........प्रश्ननिरूपणाभ्याम् ॥ ३.१.१. ॥

देहाद्यं भोग्यनीत्या दिवि भुवि च गतौ तत्रतत्रैव लभ्यं प्राणाद्यैर्भूतसूक्ष्मैरपि किमिह मुधा पूर्वदेहाद्गृहीतैः ।
जीवस्याणोर्गतिं च स्वयमुपजनयेदीश्वरः प्राणनीत्या मैवं स्वच्छन्दकृत्ये श्रुतिमितनियतौ गौरवोक्तेरयुक्तेः ॥ २७२ ॥
नानाजातीयराशिं व्यपदिशति जनो भूयसोंऽशस्य नाम्ना प्राचुर्यादेवमापः पुरुषवचस इत्युच्यते भूतवर्गः ।
व्यष्टिं पञ्चीकृतैस्तैस्सृजति हि स विभुस्तारतम्यं पुनश्च श्रद्धाशब्दस्त्विहापः कथयति निगमे तत्समाख्यावदुक्तेः ॥
द्यौः पर्जन्योऽथ पृथ्वी तदनु च पुरुषो योषिदित्येवमेतान् पञ्चाग्नीन् कल्पयित्वा परिकरसहितांस्तेषु पञ्चाग्निविद्या ।
श्रद्धाख्यं भूतसूक्ष्मं क्रमपरिणतितस्सोमवर्षान्नरेतोरूपं हव्यं सजीवं तनुधरमरुतो जुह्वतीति ब्रवीति ॥ २७४ ॥

( अथ कृतात्ययाधिकरणम् ॥ २ ॥ ) सू०—कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ३. २. ८. ॥

इष्टापूर्तादिरूपं तनुभृदिह शुभं कर्म यत् किं च कुर्यात् भुक्त्वा कृत्स्नं तदन्ते पुनरवनिमियादित्यसद्दृष्टबाधात् ।
कात्स्न्येनैत्यश्रुतत्वात् सुकृतफलतया जातिभेदाद्यधीतेस्तस्मात् प्रारब्धशेषैस्तदितरसहितैरापतेत् स्वर्गपान्थः ॥ २७५ ॥
धूमं रात्रिं च पक्षं तिमिरकलुषितं दक्षिणावृत्तिमासान् पश्चाल्लोकं पितॄणां गगनमपि मृतश्चन्द्रमभ्येति कर्मी ।
प्रत्यावृत्तौ तु चन्द्राद्गगनसततगौ धूममभ्रं च मेघं व्रीह्यादीन्याति रेतस्सिचमथ जननीं यातनाचक्रवर्ती ॥ २७६ ॥
आचारांशस्य साध्यं चरणवचनतो जातिभोगादिकं स्यात् कर्माचारौ विभक्तौ श्रुतित इति न सद्वृत्यभावात्तथोक्तेः ।
मुख्यं वृत्त्या हि कर्मण्यपि चरणवचो नैकदेशे निरोद्धव्यं जात्यादिः कर्मभेदप्रभव इति मिते चिन्त्यमाचारसाध्यम् ॥

प्रासाचारातिवृत्तौ प्रतिपदमृषयस्ससरुः प्रत्यवायान् प्राचीनांहःप्रणाशं तदनुसरणतः पुण्यकर्माहितां च ।
नातस्सत्कर्ममात्रात् त्रिदिव इति धिया तत्परित्यागशङ्का न ह्याचारप्रहीणे श्वदृतिजलसमश्शोधको वेदवर्गः ॥ २७८ ॥

(अथ अनिष्टादिकार्यधिकरणम् ॥ ३ ॥) सू०—अनिष्टादिकारिणामपि च श्रुतम् ॥ ३. १. १२. ॥

सर्वेषां देहपाते सति नियमवती चन्द्रमःप्राप्तिरुक्ता तस्मात् पापोत्तराणां निरयगतिपुरस्कारिणी मेति चेन्न ।
लोकस्संपूर्यते तैर्न पर इति गिरा संकुचेत् सर्वशब्दस्ते तत्तद्यातनान्ते तत इह सहसा कुत्सितां यान्ति योनिम् ॥
जन्मप्राप्तिर्जरायुप्रभृतिषु भविनां कर्मपाकैर्विचित्रा भूयिष्ठैः पुण्यपापैस्त्वपवदनवती पञ्चमाहुत्यपेक्षा ।
तद्वद्धूमादिमार्गः कति कति च शुभैरुत्कटैर्देहपाते दिव्यं रूपं विमानादिकमपि सपदि प्राप्य याताः प्रसिद्धाः ॥ २८० ॥

(अथ तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥) सू०—तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ ३. १. २२. ॥

आहुत्योर्देहवत्त्वं प्रथमचरमयोर्निर्विवादं तथा स्याज्जन्मैवाकाशवायुप्रभृतिषु भवतेरन्वयादित्यसारम् ।
रेतस्सिग्भावनीत्या पृथगभिलपनानर्हतामात्रमत्र द्युभ्वोः पुण्यप्रमाप्यं फलमिह पठितं नास्ति भोगश्च मध्ये ॥ २८१ ॥

(अथ नातिचिराधिकरणम् ॥ ५ ॥) सू०—नातिचिरेण विशेषात् ॥ ३. १. २३. ॥

व्योमादिस्थित्यवस्था चिरमचिरमिति व्यक्तनिर्देशहानेश्शुक्लावस्थानयात्स्यादनियतिरिति न स्वारसिक्याः प्रवृत्तेः ।
व्रीह्यादिभ्यो हि दुर्निष्प्रपततरमिति तु श्रूयते तेन पूर्वं शीघ्रं तत्तद्दशायास्त्यजनमिति परिज्ञायते वाक्यशक्त्या ॥ २८२ ॥

(अथ अन्याधिष्ठिताधिकरणम् ॥ ६ ॥) सू०—अन्याधिष्ठिते पूर्ववदभिलापात् ॥ ३. १. २४. ॥

जन्म व्रीह्यादिनाम्ना श्रुतमिह तदिदं देवमर्त्यत्ववत्स्यान्नैरात्म्यं स्थावराणां न च निगमविदस्थापयन्तीति चेन्न ।
पुण्यस्यैव प्रवृत्ते फलपरिगणने स्थावरत्वोक्त्ययोगाद्व्रतस्मिन्कर्मणीव ह्युपचरति जनिं स्थावरेऽप्यन्यदेहे ॥ २८३ ॥
हिंसायोगादशुद्धं श्रुतिविहितमपि न्याय्यमिष्टादिकं तत् पापांशं व्रीहिभावप्रभृतिषु सुकृती भुङ्क्ते इत्यप्ययुक्तम् ।
उक्ता मन्त्रार्थवादैः पशुहितमिति सा तच्चिकित्सावदेषा ब्रूते यज्ञे वधोऽसाववध इति मनुस्स्तौति निन्दा त्विहान्यत् ॥
कर्तुर्दोषं दिशेत्संज्ञपनमिह पशोस्तत्कृतोश्चोपकुर्यात् तस्मादस्मिन्निषेधं क्षिपति न विधिरित्यब्रुवन् साङ्ख्यभक्ताः ।
निर्धूते पश्वनर्थे न खलु तदुचितं पिष्टपश्वादिकल्पस्तत्तत्कालाधिकारिप्रतिनियत इति क्वापि न स्याद्विरोधः ॥ २८५ ॥
किंचोत्सर्गापवादक्रममिह जहतः कीदृशी नित्यहिंसा शुद्धं न क्वापि सिध्येत्तव हि विधिपदं स्पष्टतत्तन्निषेधम् ।
यत्रासत्यादिवैधं तदनु च विहिता निष्कृतिस्तन्निमित्ता तत्रागत्या तथा स्यादितरवदथवा केवलं तन्निमित्तम् ॥ २८६ ॥
अश्लिष्टं विग्रहाद्यैर्नभ इव मुसलैः क्षेत्रिणं केचिदूचुः कर्माकर्तारमेवं फलमपि विविधोपाधिभेदैकनिष्ठम् ।
अव्यक्तस्यापवर्गं भवभुजमपि चानादिमुक्तस्वभावं तेषामित्थं मनीषां बहिरकृत नयैरेष वैराग्यपादः ॥ २८७ ॥
पादे त्वर्थाष्षडस्मिन्वपुरिह विजहद्भूतसूक्ष्मैस्सहेयात् भुक्तस्वर्गोऽवरोहेदनुशयसहितो मात्रया भिन्नमार्गः ।
चन्द्रप्राप्त्यादि न स्यान्निरयपथजुषामम्बरादौ सदृक्त्वं तस्माच्छीघ्रोऽवरोहः परवपुषि परं व्रीहिपूर्वेऽपि योगः ॥ २८८ ॥

॥ इति तृतीयाध्यायस्य प्रथमः पादः ॥ १ ॥ अथ तृतीयाध्यायस्य द्वितीयः पादः ॥

ब्रह्मैव स्वैस्स्वभावैर्बहुमुखमवदत् प्राक्तनाध्याययुग्मे तस्येहाकृष्य चिन्ता किमिति पुनरसौ साधनाध्यायमध्ये ।

मैवं विद्याः प्रभेत्तुं विशदयति परं तद्धि तद्रूपभेदात्सिद्धोपायादिभावं प्रथयति च विभोः प्राप्यतृष्णाप्रथिम्ने ॥ २८९ ॥
नैर्गुण्यं ब्रह्मणश्चेद्वितथ इह गुणैर्ब्रह्मविद्याविभागः सोऽस्त्वेतैः कल्पितैश्चेच्छ्रुतिमतविहतिर्नात्र दृष्टिक्रमोऽपि ।
निर्दोषत्वं च नित्यं यदि वदसि मुधा दोषशान्त्यर्थयत्नः कल्प्यं चेद्दृष्टता स्यात् प्रकृतिरिति परक्षिप्तये चैष पादः ॥
किं चादौ चिन्त्यभावः प्रमितिविषयता स्वप्रभत्वं सुखत्वं विश्वाधिष्ठानता च स्वबहुभवनधीर्निर्विशेषे कथं स्यात् ।
सर्वश्रुत्यर्थहानिः स्ववचनविहतिस्सर्वमानैश्च बाधो मायावैयात्यभाजामिति सगुणदशोपाम्तिवादश्च दुःस्थः ॥ २९१ ॥
त्यक्तं दोषैर्गुणाढ्यं यदि पुनरिह तद्ब्रह्म चिन्त्येत पादे जीवे स्वप्नाद्यवस्थामननमथ कथं जाघटीतीति चेन्न ।
स्वाप्नार्थस्रष्टृभावप्रभृतिबहुविधब्रह्ममाहात्म्यसिद्ध्यै जन्तोरस्य स्वमुक्तावतिपरवशताज्ञप्तये चैनदत्र ॥ २९२ ॥
पादस्यास्याद्यमर्धं कतिचिदधिजगुः पूर्वपादस्य शेषं पश्चादर्धं तु साक्षादनुघटितमुपास्त्यर्थतत्तद्गुणोक्तेः ।
एतन्नातीव हृद्यं शबलितकथने चातुरी वैपरीत्याद्ब्रह्मोक्तौ जीवदोषग्रह इह तु मुखं तत्प्रतिद्वन्द्विसिद्धेः ॥ २९३ ॥
स्वप्नेऽर्थाः सन्तु सृष्टास्तदपि बहुविधा दुस्त्यजा भ्रान्तिरत्र प्रध्वस्तानामिदानींतनवदनुभवात्स्थायितादिभ्रमाच्च ।
सत्यं श्रुत्यादिसिद्धे श्रुतपरिहरणायोगतस्सृष्टिमात्रे स्वीकुर्यांशे तु बाधाद्भ्रममपि हि यथाजागरं न क्षिपामः ॥ २९४ ॥
कश्चिद्योगप्रभावान्निजपरभवनस्वैरसञ्चारनीत्या निष्क्रान्तः पूर्वदेहाद्विशति परवपुः पूर्वमाप्नोति भूयः ।
इत्थं स्वप्नेऽप्युदन्तस्थितिरिति कतिचिच्छ्वासवृत्त्याऽन्यथाऽन्ये चित्ताद्यैर्वाप्रसृत्यैन्तरतनुभजने सौभरिन्यायसिद्धेः ॥ २९५ ॥

( अथ सन्ध्याधिकरणम् ॥ १ ॥ ) सू०—सन्ध्ये सृष्टिराह हि ॥ ३. २. १. ॥

उक्तं पत्या प्रजानां भवति दहरवत् सत्यसङ्कल्पताद्यं पुत्रादेश्चैष कर्ता प्रकृत इह सृजेत् स्वाप्नमर्थं च मैवम् ।
मुक्तौ तादृग्गुणोक्तेरनभिमतसमुत्पादनादेरयोगात् स्वप्नानां सूचकत्वादपि निखिलजगत्कर्तृरेषा[हि]ऽपि सृष्टिः ॥ २९६ ॥
कामंकामं विधातेत्यपि णमुलुचितोऽनूद्यते चेश इत्थं सोऽयं सुप्तेषु जागर्त्यपि विशदमिदं संपरिष्वङ्गवाक्यात् ।
तत्तत्कालावमानाः कतिकति नियता जागरेऽप्यर्थभेदास्तत्तत्कर्मानुरूपं फलवितरणमित्येतदप्युक्तमाप्तैः ॥ २९७ ॥
मायामात्रोक्तिलाभाच्छ्रुतिमुखसुगता विश्वमिथ्यात्वमाहुश्शास्त्रारम्भे तदेभिः कथितमिह ततोऽसङ्गतत्वादिदुस्स्थम् ।
मायाशब्दो न मिथ्यावचन उपचरत्वत्र तत् किं ततस्स्यात् सत्येऽस्मादौ प्रयोगादुचितनियमने सोऽयमाश्चर्यतार्थः ॥

( अथ तदभावाधिकरणम् ॥ २ ॥ ) सू०—तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ३. २. ७. ॥

स्थानं जन्तोस्सुषुप्तौ श्रुतिरनियमतो वक्ति नाड्यः पुरीतद्धार्दं ब्रह्मेति तस्मादिह भवतु मिथो नैरपेक्ष्याद्विकल्पः ।
तन्न प्रासादखट्वाशयनवदुपकृत्यन्तरैर्योजितानां पक्षेपक्षे विकल्पः क्रमघटितचतुर्दोषयुक्तो न युक्तः ॥ २९९ ॥

( अथ कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३ ॥ ) सू०—स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ३. २. ९. ॥

मुक्तिर्ब्रह्मण्यपीतिर्जहदसुखगणा तादृशीयं सुषुप्तिश्श्रुत्यैव ख्याप्यतेऽतस्तदनु तनुभृदुद्बुध्यमानस्ततोऽन्यः ।
मैवं कर्मानुवृत्तेस्स्मरणनियमतः पूर्व एवेति शब्दान्मोक्षोपायादिशिष्टेस्स्वपदनुवदनात् प्राच्य एव प्रबुद्धः ॥ ३०० ॥
जीवानादित्वमूचे दृषदनुकरणं क्षेप्स्यते चापवर्गे स्वर्गाद्यर्थप्रवृत्तिः श्रुतिनयविदिता सौगताद्याश्च भग्नाः ।
कल्पान्तेऽप्येकतोक्तिर्नियमितविषया नामरूपप्रहाणात् भूयश्चिन्ता सुषुप्ते प्रलयसमदशासंजिहासादिसिद्ध्यै ॥ ३०१ ॥

( अथ मुग्धाधिकरणम् ॥ ४ ॥ ) सू०—मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ ३. २. १०. ॥

जाग्रत्स्वप्नौ न बाह्यावगमविरहितौ श्वासपूर्णा सुषुप्तिस्तस्मान्मुग्धिर्मृतिस्स्यात् प्रशमितकरणप्राणवर्गेति चेन्न ।
मृत्यादेर्हेतुभेदात् स्थितिमृतिविशयादुत्थितेश्वानियत्यान्मनुं प्रक्रम्य मध्ये विरमति विधिनेत्यत्र तुर्यार्द्धभावः ॥ ३०२ ॥

जन्तूनां जागरादिस्थितिषु भवति यद्वैशसं दर्शितं तत् तत्तत्स्थानादियोगेऽप्यनघशुभगुणं ब्रह्म संशोध्यतेऽ[द्य]त्र ।
संसर्गैक्यादिमूलान् परिहरति ततो दोषवर्गानुभाभ्यां हानत्वौदार्यहानी परमपनयते नीतियुग्मेन नेतुः ॥ ३०३ ॥

नैर्गुण्यं निर्गुणोक्तेर्गुणवचनमिहाविद्यधर्मार्थवादो नैर्दोष्यं वस्तुवृत्त्या तदितरदखिलं स्वाप्नभोगादितुल्यम् ।
इत्थं जीवेशभूमापहरणकुहनावादसंमुह्यमानान् क्षेप्तुं न स्थानतोऽपीत्यधिकरणमथारभ्यतेऽनेकशृङ्गम् ॥ ३०४ ॥

( अथ उभयलिङ्गाधिकरणम् ॥ ६ ॥ ) सू०—न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ३.२.११. ॥

हेयं वस्तु स्वतो यत् स्थितिरिह हि भवेद्दुःखकृत् स्वेच्छयाऽपि त्याज्यत्वं नान्यथा स्यादिति न निरुपधेर्हेयभावस्य हानिः ।
नित्यस्थानन्त्यभाजो भवित इव दशाभेदतो नाप्यवद्यं श्रुत्यैवैकत्र देहे परनदितरयोरशुद्ध्यशुद्धी ह्यधीते ॥ ३०५ ॥

ब्रह्मक्षत्रादिदेहेष्वणुरिव विभुरप्यात्मभावेन तिष्ठंस्तत्तच्छब्दाभिलप्यस्तदिह स न कथं तत्तदादेशवश्यः ।
मैवं न ज्ञाप्यतेऽसावविदितविरहाच्छासितृत्वान्न शास्यः किंचिज्ज्ञो ह्यन्यतन्त्रो जगति हितविदा बोध्यते प्रेर्यते च ॥

उत्सर्गेणापवादं न खलु नयविदः क्षोभणायं क्षमन्ते तस्माद्ब्राह्म गुणादौ विधिविषयमतिक्रम्य तिष्ठन्निषेधः ।
एवं शान्ते विरोधे न हि समविषयापच्छिदान्यार्थमतिदिष्टो नित्यं निषेधः पर इह च ततस्स्यादुपक्रान्तिर्नीतिः ॥

सत्त्वं कार्यस्य गोपायति कथमसतस्सद्भवेदित्यर्थोऽतिर्द्रव्यान्यत्वं हि कार्ये व्यपनयति परं मृत्तिकेत्येवशब्दः ।
अन्तर्भावाद्विशिष्टे भगवति जगतां नेह नानेति युक्तं निर्दिष्टेयत्त्वशङ्कां प्रशमयति परे नेति नेतीति चोक्तिः ॥ ३०८ ॥

तत्तद्वस्तुप्रदेशे सकलगुणतया पूर्णदस्यः परात्मा वृद्धिह्रासादिभेदोज्झित इति हि जलाधारसूर्योपमोक्तिः ।
अस्पर्शोदाहृतिश्चेन्न हि घटकरकाकाशदृष्टान्तयुक्तिस्तस्माद्ब्रह्म द्विलिङ्गं द्विविधविभवमित्येव वेदान्तपक्षः ॥ ३०९ ॥

( अथ अहिकुण्डलाधिकरणम् ॥ ६ ॥ ) सू०—उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ ३. २. २६. ॥

विश्वस्रष्टुस्स्वदुःखप्रजननमिह न स्वांशतोऽचित्त्वकल्पसौ मृत्तत्कार्यादिकं च स्वरसमिह बहूदाहृतं सप्रतिज्ञम् ।
तस्मादव्याकृतादिर्विहरणनियता विक्रियैवेति चेन्न स्वांशे मौढ्यं वितन्वन्विहरति भगवानित्यनर्थानपोहात् ॥ ३१० ॥

कश्चिन्नित्याचिदंशो विविधविकृतिमान्ब्रह्मणीत्याहुरेके फेनादिन्यायतोऽन्ये सति विकृतिवशाज्ज्ञाज्ञसर्वज्ञभागान् ।
चन्द्रज्योत्स्नादिनीत्या कतिचिदिह जगद्ब्रह्मणोरैकजात्यं सर्वे ते सर्ववेदस्वरसगतिहतेरत्र वित्रासनीयाः ॥ ३११ ॥

( अथ पराधिकरणम् ॥ ७ ॥ ) सू०—परमतस्सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३. २. ३०. ॥

सेतुं तीर्त्वेत्यधीतेर्मितमिति वचनात् प्राप्यसंबन्धितोक्तेरन्याधिक्यश्रुतेरप्यतिवहननयात् कारणं प्रापकं स्यात् ।
प्राप्यं त्वन्यद्भवेदित्यसदनवधिके कारणे प्राप्यतोक्तेस्सेतुत्वाद्युक्तिरस्मिन् बहुभिरविहतां वृत्तिमङ्गीकरोतु ॥ ३१२ ॥

सेतुत्वं सेतुतुल्याद्विधरणनियमाद्बन्धनाद्वाऽत्र युक्तं व्याप्तेऽप्यस्मिन्नुपाधेः परिमितिवचनं सार्थकं सूत्रितं प्राक् ।
चातुष्पद्यं च तत्तच्छ्रुतिभिरनुगुणं कल्प्यतेऽनन्तभूम्नस्स्वस्येत्येवामृतस्येत्यभिहितमथवा मुक्तिरेवामृतं स्यात् ॥ ३१३ ॥

अन्यस्याधिक्यवादे परमवधितया कारणं यत्र दृष्टं तत्र ह्यव्याकृतादिस्तदवधिरितरापेक्षयाऽसौ परश्च ।
यस्मादन्यत्परं नेत्यभिहितविषये तत्परोक्तेरयुक्तेरेवंत्वादित्यनूक्तिस्तत इति यदि वा व्याप्यमुक्तं तदस्तु ॥ ३१४ ॥

(अथ फलाधिकरणम् ॥ ८ ॥) सू०—फलमत उपपत्तेः ॥ ३. २. ३७. ॥

आराध्यः कर्मकाण्डस्थितनयनिवहस्थापितानां क्रियाणामध्यक्षो देवतानामनुपधिमहिमा मध्यकाण्डोदितानाम् ।
अत्राप्येतावतोक्तो भवभयचकितप्राप्युपास्त्येकलक्ष्यस्तत्तच्छास्त्रार्थयोग्यं दिशति फलमिति स्थाप्यतेऽथात्युदारः ॥ ३१५ ॥
कृष्यादेर्मर्दनादेरपि भवति फलं द्वारतो वाऽन्यथा वा धर्माणां साधनत्वं श्रुतिभिरवगतं दोषबाधोज्झिताभिः ।
तस्मादीशप्रसादात् फलमिति तु वचस्तत्प्रशंसेति चेन्न श्रौताराध्यप्रसादत्यजनकदनतोऽपूर्वकल्प्तेरयोगात् ॥ ३१६ ॥
यद्यप्याराध्यमूलं फलमिति फलितं देवताधिक्रियायां कर्मापेक्षा तथोक्ता फलजननपरप्रेरणादौ तथाऽपि ।
साक्षित्वानादरत्वप्रभृतिपरगुणं प्रेक्ष्य तत्प्रीणनादौ शङ्कातङ्कैर्निरुद्धांस्त्वरयितुमधुना तादृशोदारतोक्तिः ॥ ३१७ ॥
सम्राजस्सानुकंपात् पितुरुचितविदस्साम्यभाजो वदान्यात् स्थाने विन्दन्ति पुत्रा नियतरुचिभिदायन्त्रितासंततमर्थम् ।
तत्र प्राप्यं स्वतो यद्विहितनिरिह यतस्तत्प्रशान्तिश्च यस्माद्देयं यद्वा विशेषाद्दमनमपि यथालोकमत्रापि तत् स्यात् ॥ ३१८ ॥
शुद्धानन्दे तदित्थं शुभगुणजलधौ सत्यनित्यस्वदेहे देवीभूषायुधाद्यैरतिशयिनि कनद्भोगलीलाविभूतौ ।
शेषित्वाधारभावप्रभृतिबहुविधस्थास्नुमंबन्धदीप्ते दृष्टिस्वर्गापवर्गप्रसविनरि हरौ निर्निमेषा श्रुतिर्नः ॥ ३१९ ॥
पादे स्वप्नार्थहेतुस्तदयमिह सुषुप्त्याद्यवस्थासु गोप्ता मुग्धोद्बोधादिकर्ता त्वनघशुभगुणोऽचिद्विरंशी स्वदेहैः ।
पारम्यस्यैकसीमा सकलफलद इत्युच्यते भक्तिभूम्ने सत्ये त्वेवं गुणादावथ परभजने रूपभेदादि चिन्त्यम् ॥ ३२० ॥

॥ इति तृतीयाध्यायस्य द्वितीयः पादः ॥ २ ॥ अथ तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

तत्त्वज्ञानानुविद्धं हिततममनघं मोक्ष्यमाणस्य वक्तुं तत्त्वे निर्धूय तर्कज्वरजनितमहासन्निपातप्रलापान् ।
निष्पन्ने तत्त्वबोधे न किमपि विदुषा साध्यमित्युद्गृणद्भ्यो यावज्जीवानुवर्त्यं मुररिपुभजनं मुक्तिलाभाय वक्ति ॥
भीमाभ्यो यातनाभ्यः पितृपथगमनावर्तनादेश्च बिभ्यत्तृष्णां कृष्णामृताब्धौ परिणयति परां यावता तावदुक्तम् ।
इत्थं लब्धाधिकारः परमधिकुरुते साधने यत्र साङ्गे पादद्वन्द्वे परस्मिंस्तदिह बहुभिदाबर्बरं निर्ब्रवीति ॥ ३२२ ॥
एकस्मिन्नेव पादे निपुणनयकृता न द्वयोस्तर्कणं स्यात् भेदोऽभेदश्च नैको विषय इह भवेदन्यहानप्रसङ्गात् ।
तस्मादस्मिन्प्रकीर्णा नयविततिरिति प्रेक्षितग्रन्थचोद्ये वेद्यावच्छिन्नविद्यानियमकृदयमित्यैदमर्थ्यं समर्थ्यम् ॥ ३२३ ॥
आख्यावन्तं गुणानां निजगदुरुपसंहारतः पादमेतं विद्यैक्यार्थं तदस्मिन्नवदनतया भेदचिन्ता प्रसक्ता ।
इत्थं शुश्रूषुशङ्कामिह शिथिलयितुं भाषितं भाष्यकारैस्तद्भेदाभेदमीमांसनमिति विषयस्तत्र चोक्तोऽनुवृत्तः ॥ ३२४ ॥
निस्सीमानन्दनाडिन्धमनिरुपधिकानन्दसम्पद्गुणौघे विद्याभेदैर्विभज्य प्रणिधिरिह यदि प्राप्तिरप्यंशतस्स्यात् ।
मैवं तैरेव धर्मैस्तदितरसहितैः पूर्णकामस्य पूर्णं प्राप्यं ब्रह्मैव नान्यत् किमपि फलमतस्तत्क्रतुन्यायसिद्धिः ॥ ३२५ ॥

(अथ सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥) सू०—सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ ३. ३. १. ॥

भेदश्शब्दान्तराद्यैर्विधिषु नियमितः कर्मकाण्डे द्वितीये संयोगाद्यैक्यतोऽन्यस्समुदयनियमात् सैव विद्यासु नीतिः ।

आदौ तेनैव शाखान्तरनयमुदितं चोदनादेरभेदाच्छुत्यैवाक्षिप्य भूयः प्रतिसमधिततं भेदकान्यार्थतोक्त्या ॥ ३२६ ॥

शाखासु प्रक्रियाऽन्या श्रवणमपि पुनर्दृष्टमत्राविशेषं विद्याभेदस्ततस्स्यादिति न तदुभयं युक्तमध्येतृभेदात् ।
तेषामेवेति वाक्यात् क्वचिदुपजनिता भेदशङ्का त्वयुक्ता स्वाध्याये ब्रह्मविद्यापदमिह हि भवेत्तद्व्रतेनान्वयोक्तेः ॥ ३२७ ॥

रूपैक्यादैक्यसिद्धौ किमितरदुपसंहार्थमन्यो गुणश्चेद्भेदो न स्याद्विकल्प्यं तदिह किमफला तेन चिन्तेति चेन्न ।
वेद्याकारैक्यमैक्यं दिशति तदधिकं किंचिदाकृप्यतेऽङ्गं कर्मण्यप्येवमेव ह्युपहतिविषयो भेदकांशानिरिक्तः ॥ ३२८ ॥

(अथ अन्यथात्वाधिकरणम् ॥ २ ॥) सू०—अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ३. ३. ६. ॥

प्रागवच्छाखाविभेदेऽप्युपशमितभिदा तादृगुद्गीथविद्या स्यादेका चोदनाद्यैस्तदसदुभयधा रूपभेदोपलब्धेः ।
गाता गेयं च गेये सकलमसकलं चेति वैषम्यसिद्धौ शेषाभेदोऽप्यभेदं न गमयति भिदा त्वेकभेदेऽपि सिद्ध्येत् ॥

छन्दोगोद्गीथशब्दस्तदवयवपरः प्रक्रमादिप्रसिद्धेः कृत्स्नोद्गीथाभिधायी प्रकरणनियमाभावतो वाजिनां स्यात् ।
उद्गीथोक्तिश्च नैषामुपचरणवती गातरि प्रक्रमस्था तत्कर्त्रा साधनीये द्विपदुपशमने तत्फलत्वोक्त्यबाधात् ॥ ३३० ॥

यद्यप्यब्रह्मविद्या परपरिभवनाद्यैहिकार्थप्रयुक्ता न ग्राह्या मोक्षशास्त्रे तदपि समतया तत्परीक्षेति केचित् ।
काम्या विद्याऽप्यनिष्टव्यपनयनमुखैर्ब्रह्मविद्योपयुक्तैस्तत्साध्यप्रभेदैर्भवति समुचितालोचनेत्याहुरन्ये ॥ ३३१ ॥

अज्ञातब्रह्मतत्त्वः कथमिव विमृशेत् कुत्रचिद्ब्रह्मदृष्टिं तस्मात्तत्तादृशीनां समुचितमगतेरत्र मीमांसनं स्यात् ।
आदध्युः कर्मणां च स्वफलवितरणे वीर्यवत्त्वातिरेकं ब्रह्मध्यानार्थकर्मातिशयजननतः प्रस्तुतापेक्षितं तत् ॥ ३३२ ॥

(अथ सर्वाभेदाधिकरणम् ॥ ३ ॥) सू०—सर्वाभेदादन्यत्रेमे ॥ ३. ३. १०. ॥

ज्यैष्ठ्यश्रैष्ठ्यादिसाम्ये क्वचन समधिकं भाति वासिष्ठ्यपूर्वं तेनेत्थं रूपभेदाद्बहुनिगमगता भिद्यतां प्राणविद्या ।
मैवं वागादितत्तद्गुणपरवशतावर्णनस्याविशेषाद्वागाद्यैस्स्वस्वधर्मोपचरणमकृतं तावता स्यान्न भेदः ॥ ३३३ ॥

(अथ आनन्दाद्यधिकरणम् ॥ ४ ॥) सू०—आनन्दादयः प्रधानस्य ॥ ३. ३. ११. ॥

नानाशब्दादिभेदादिति खलु भिदुरां वक्ष्यति ब्रह्मविद्यां रूपं विद्यान्तरस्य प्रकरणपठितान्नान्यदन्यत्र योज्यम् ।
तस्मात् सत्यत्वपूर्वास्तदितरगुणवत् स्युर्व्यवस्थापनीया मैवं ब्रह्मस्वरूपावगतिरिह यतस्तद्धि सर्वास्वपेक्ष्यम् ॥ ३३४ ॥

सत्यत्वं विश्वहेतौ बहुविधचिदचिद्विक्रियाजालहानेः ज्ञानत्वं ज्ञातृभावात् स्वरबहुलतया स्वप्रकाशत्वतश्च ।
त्रिध्येकाभिस्तु सर्वं प्रमितमिह परिच्छित्तिभिर्ब्रह्मणोऽन्यत्तस्यानन्त्यं वियोगात्तिसृभिरपि सदा निर्मलानन्दधाम्नः ॥ ३३५ ॥

उक्तं जन्मादिसूत्रे ननु निखिलजगद्धेतुता ब्रह्मलक्ष्म स्यात्तेनैव स्वरूपावगतिरिह मुधा सत्यतादीति चेन्न ।
हेतोरीशस्य हेत्वन्तरगतविविधावद्यवर्गप्रसङ्गे शङ्कारूढे कृपेणेतरविभजनतस्तस्य साफल्यसिद्धेः ॥ ३३६ ॥

नन्वाध्यानं प्रियाद्यैरपि भवति शिरःपक्षपुच्छादिरूपैर्बाढं तत्र प्रियाद्यैस्तदवगतिरतस्ते तु सर्वानुवृत्ताः ।
पुच्छाद्यंशो निरंशे न भवति न च तद्दृष्टिरुत्कृष्टतत्त्वे तस्माच्चित्याग्निरूपक्रमवदिह कृतं रूपणं ब्रह्मणि स्यात् ॥ ३३७ ॥

आनन्दत्वप्रधानं कतिचिदिह विदुस्सौत्रमानन्दशब्दं धर्मानन्दाभिधानं तदुभयवचनं वेति पश्यन्ति केचित् ।
ज्ञानोक्तौ चैवमेतत्तदितरसमता यावता स्यान्न शङ्क्या तावद्धर्मानुवृत्तिर्बहुभजनपदे ब्रह्मणि स्थाप्यतेऽत्र ॥ ३३८ ॥

(अथ कार्याख्यानाधिकरणम् ॥ ५ ॥) सू०—कार्याख्यानादपूर्वम् ॥ ३. ३. १८. ॥

आचामेदित्यपूर्वाचमनमिह विधेः प्राणविद्यावतस्स्यान्मैवं स्मृत्यादिसिद्धे परमनुविहिता प्राणवासस्त्वदृष्टिः ।
भुञ्जीतेत्यादिनीत्या विधिरपि घटते प्राप्तधात्वर्थनिष्ठः प्रागुक्ता प्राणविद्या तदिदमवसरे चिन्तितं त्वङ्गमस्याः ॥ ३३९ ॥

आदावन्ते च वासःपरिधिरभिहितो मन्यतिश्चात्र दृष्ट्यै सा चाराध्यप्रियार्था स्तुतिरिह न भवेद्भत्यभावाभिनन्द्या ।
युक्तश्चापूर्वभावात् परिदधतिगिरा तद्विधानाभिसन्धिः प्राणश्चाराधनीयः परिहितवसनो युज्यते सद्भिरद्भिः ॥ ३४० ॥

(अथ समानाधिकरणम् ॥ ६ ॥) सू०—समान एवं चाभेदात् ॥ ३. ३. १९. ॥

शाखैक्येऽध्येतृभेदो न भवति न गुणः कश्चिदन्यो विधेयस्तस्मादुक्ताविशेषश्रवणमिह पुनः किं न विद्यां विभिन्द्यात् ।
मैवं यद्यप्यनूक्तिर्नतु गुणविधये कल्पते स्यात्तथाऽपि व्यक्त्यै सौकर्यतश्च व्यसनसममनन्यायतस्त्वैक्यसिद्धेः ॥ ३४१ ॥

छन्दोगैर्वाजिभिश्च स्फुटमनुपठिता भाति शाण्डिल्यविद्या भेदाभेदावमर्शस्त्विह किमिति न सन्दर्शितो भाष्यकारैः ।
तद्ब्रूमो यत्रयत्राधिकपरिपठनं तत्रतत्राधिकानामन्तर्भावादियुक्तावनधिकमधिकं वेति साधारणोक्तेः ॥ ३४२ ॥

स्थानद्वन्द्वे वशित्वप्रभृतिविरहिता वाजिभिस्तद्युता चाथीता शाण्डिल्यविद्या तदिह भिदुरता कल्पनीयेति चेन्न ।
आरण्योक्तं वशित्वाद्यपि खलु विनतिस्सत्यसङ्कल्पतायाः सार्थीताग्नि रहस्येऽप्यधिकविरहतो नात्र विद्यैक्यबाधः ॥ ३४३ ॥

(अथ संबन्धाधिकरणम् ॥ ७ ॥) सू०— संबन्धादेवमन्यत्रापि ॥ ३. ३. २०. ॥

अक्ष्यादित्योपलक्ष्ये भगवति भजनं चोदनादेरभेदादेकं स्यात्तेन नाम्नोर्नियतिरिति न स्थानतो रूपभेदात् ।
स्थानं तत्स्थत्वबुद्ध्यै ह्युपदिशति न चेत् स्यान्न रूपातिदेशस्तस्मादर्काक्षियोगादहरहमिति तन्नामनी स्थापनीये ॥ ३४४ ॥

(अथ संभृत्यधिकरणम् ॥ ८ ॥) सू०—संभृतिद्युव्याप्त्यपि चातः ॥ ३. ३. २३. ॥

संभृत्यादिर्गुणौघः प्रकरणपठनाभावतस्सर्वविद्यास्वन्वीयेतेति चेन्न क्वचिदगतिकतो लिङ्गतस्स्थापितत्वात् ।
अल्पस्थानासु विद्यास्वघटितवपुषस्त्वोचितस्थानवृत्तेर्द्युव्याप्तेरेकमन्त्रे सहपठनवशात् तत्समस्थानितोऽन्ये ॥ ३४५ ॥

(अथ पुरुषविद्याधिकरणम् ॥ ९ ॥) सू०—पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ ३. ३. २४. ॥

आख्यैक्यादभेदः पुरुषविषययोर्विद्ययोरित्ययुक्तं यज्ञाद्याकारक्लृप्तेरिह विषमतया रूपभेदप्रसिद्धेः ।
तादर्थ्यात्तैत्तिरीये परभजनफलं मुक्तिरवाप्यनुक्ताच्छान्दोग्ये पूर्णमायुः फलमिति तु तयोर्भाति संयोगभेदः ॥ ३४६ ॥

स्पष्टे रूपादिभेदे हठसमुपनतो नामसाम्यादिमात्रात् पुंविद्यापूर्वपक्षो मृदुरिति विफलाऽधिक्रियैषेति चेन्न ।
अन्यैव न्यासविद्या प्रकरणपठिता तद्विधानप्रधानेत्यस्वानन्याादिसिद्ध्यै विभजनमनयोरित्यतीवार्थवत्त्वात् ॥ ३४७ ॥

यद्येवं यज्ञदृष्टिः परविदि पुरुषे चोद्यते सानुबन्धे यज्ञ्यानङ्गभूतं कथमिह विविधं कल्प्यते तत्रतत्र ।
तस्मात् प्रक्रान्तविद्यास्तुतिरियमुचितेत्याहुरेकेऽन्यथाऽन्ये तिष्ठत्वेतद्द्विधाऽपि प्रकृतसुघटता संप्रदायस्तु चिन्त्यः ॥ ३४८ ॥

(अथ वेधाद्यधिकरणम् ॥ १० ॥) सू०—वेधाद्यर्थभेदात् ॥ ३. ३. २५. ॥

युज्येरन् ब्रह्मविद्यापरिसरपठिताः शं न इत्यादिमन्त्राः तादर्थ्यात् सर्वविद्यास्विति न तदुदिताधीतिशेषत्वलिङ्गात् ।
नो चेदन्येऽपि तद्वत् सविधपठनतस्सन्तु शुक्रं प्रविध्येत्येवंप्रायास्तदर्थां न च घटत इदं लिङ्गतो दुर्बलत्वात् ॥ ३४९

( अथ हान्यधिकरणम् ॥ ११ ॥ ) सू०—हानौ तूपायन........गानवत्तदुक्तम् ॥ ३. ३. २६. ॥

शाखे द्वे मुक्तिभाजः क्वचन कथयतः पुण्यपापप्रहाणं ब्रूतेऽन्या तत्प्रवेशं प्रियतदितरयोर्दायसंक्रान्तिकाले ।
हानं चोपायनं च क्वचिदिति पृथगाम्नातसंपर्कसिद्धिर्वाक्यं शाखान्तरस्थं भवति हि विविधाकाङ्क्षया वाक्यशेषः ॥ ३५० ॥

इत्थं ब्रह्मज्ञकर्मत्यजनमितरसङ्क्रान्तिसंपृक्तमस्तु स्याच्चिन्तायां व्यवस्था पृथगनुपठनादित्यसत् क्लृप्तिदौस्स्थ्यात् ।
सर्वेषां मुक्तिभाजां द्वितयमपि यथोपास्ति साध्यं समानं तच्चिन्ताऽसौ तथा तन्महिमविद इति स्थापनीयोभयत्र ॥ ३५१ ॥

कर्त्रा तेनैव भोग्यं शुभमितरदिति स्थापितं कर्मकाण्डे तस्माद्ब्रह्मज्ञकर्म द्विपति सुहृदि वा नापनेदित्ययुक्तम् ।
विद्यामाहात्म्यतो यद्विगलति विदुषः कर्म तत्साध्यतुल्यं विद्वत्प्रद्वेषभक्त्योः फलमिति कथने वाक्यतात्पर्यसिद्धेः ॥

( अथ साम्परायाधिकरणम् ॥ १२ ॥ ) सू०—साम्पराये तर्तव्याभावात्तथा ह्यन्ये ॥ ३. ३. २७. ॥

कर्मोद्धूतिर्मुमुक्षोः क्वचिदुपनिषदि श्रूयते साम्पराये मार्गेऽन्यस्यां द्विधैवं शकलश इह तच्चिन्तनं चास्तु मा भूत् ।
न ह्युक्तं कर्मसाध्यं पथि फलमथ गत्यर्थदेहानुवृत्तिं मुक्त्यै विद्यैव कुर्यादघहतिवचनं पाठतोऽर्थो बली च ॥ ३५३ ॥

निश्शेषं कर्म नश्येदिह यदि विदुषस्स्थूलदेहान्तमात्रे विश्राम्येत्तस्य तावच्चिरमिति हि वचो नार्थवत्त्वं गतेस्स्यात् ।
गत्वा सम्पद्य चाविर्भवनमिति न संवोभवीतीत्ययुक्तं स्याद्धीसङ्कोचमात्रस्थितिकृदनुगतस्सूक्ष्मसंस्कारयोगः ॥ ३५४ ॥

( अथ अनियमाधिकरणम् ॥ १३ ॥ ) सू०—अनियमस्सर्वेषामविरोधश्शब्दानुमानाभ्याम् ॥ ३. ३. ३२. ॥

पन्थास्स्यादर्चिरादिः फलमिह निखिलब्रह्मविद्यासु मा वा प्रारभ्याधीतियोगात् प्रकरणनियता तस्य चिन्तेति चेन्न ।
सर्वासां तद्य इत्थं विदुरिति वचसाऽथात्र ये चेति चोक्त्या मार्गे साधारणेऽस्मिन्नदनुसरणतस्तद्वदेवास्य चिन्ता ॥ ३५५ ॥

हेयोपादेयमार्गद्वितयमुपदिशन्मुक्तिदाता मुमुक्षोर्योगी यः कश्चनैतत्सरणियुगलविन्मुह्यते नेत्यगायत् ।
तस्मादस्मादशाधीत्यविशदविशदीकर्तृवक्यावमर्शात् ब्रह्मप्राप्त्यर्हकृत्स्नप्रणिहितघटितं मार्गचिन्ताविधानम् ॥ ३५६ ॥

हानादेरर्चिरादेरपि किमभिहितं चिन्तनं सूत्रकारैर्विद्याङ्गत्वादिसिद्ध्यै यदि भवतु तदाऽनन्तरे पाद एतत् ।
मैवं विद्याङ्गतायामपि भजनमिवेदं च धीत्वाविशेषात् कर्मादिभ्यो विभक्तं कथयितुमिह तत्सूत्रणं स्थानपाति ॥ ३५७ ॥

( अथ अक्षरध्यधिकरणम् ॥ १४ ॥ ) सू—अक्षरधियां........मौपसदवत्तदुक्तम् ॥ ३. ३. ३३. ॥

यस्यामस्थूलतादिः प्रपठित उचितं चिन्तनं तस्य तस्यां नान्यस्यां मानहानेर्न यदि नियमनं कस्य कुत्रेति चेन्न ।
हेतुत्वोन्नेयदोषव्यपनयनमिह ब्रह्मविद्यासु सर्वास्वानन्दाधिक्रियोक्तक्रमनियमितमित्यस्य सार्वत्रिकत्वात् ॥ ३५८ ॥

सत्यत्वाद्यैस्स्वरूपावगतिरभिहिता सर्वविद्यानुवृत्त्या भूयस्तत्तुल्यधर्मेष्वधिकरणमिदं स्याद्वृथैवेति चेन्न ।
कैश्चिज्ज्ञानस्वरूपे क्वचिदितरगतं किंचिदन्यन्निषेध्यं व्यावृत्त्या न स्वरूपावगतिरत इति प्रेक्षणस्यात्र रोधात् ॥ ३५९ ॥

व्यावर्त्यानन्त्यतस्तद्व्युदसनमपि हि स्यादनन्तं ततस्तच्चिन्ता किंचिज्ज्ञसाध्या जलधितरणवन्नोपदिश्येत मैवम् ।
तत्तत्सामान्यधर्मानुगमकबलिताशेषभेदोपदेशे तादृक्चिन्तोपपत्तेरनवममिति वा गृह्यतां संगृहीतिः ॥ ३६० ॥

( अथ अन्तरत्वाधिकरणम् ॥ १५ ॥ ) सू०—अन्तराभूत........ चेन्नोपदेशवत् ॥ ३. ३. ३५. ॥

सूत्रस्वारस्यलाभात् प्रथममसुभृतः पूर्वपक्षे निवेशः सिद्धान्ते ब्रह्मणश्चेत्यधिकरणगतिस्तोकशङ्कापनुत्त्यै ।

साक्षाद्ब्रह्मेति वाक्यद्वयमवमृशतामन्यशङ्कैव न स्यादित्यालोच्याथ भाष्ये परविषयतया पूर्वपक्षोऽप्युपात्तः ॥ ३६१ ॥
यत् साक्षादित्यमुष्मिन् श्रुतिशिरसि परं ब्रह्म वेद्यं यदेवेत्येतस्मिंश्चास्त्वथापि प्रतिवचनभिदा तत्र रूपं भिनत्ति ।
विद्याभित्प्रष्टृभेदोऽप्ययमिति यदि नानूद्य भूयोऽनुयोगात् पश्चादुक्तश्च दोषात्यय इह न भिदां सौति साधारणत्वात् ॥
सद्विद्यायां यदा हि प्रतिवचनभिदा प्रश्नभेदानुसाराद्विद्यैकत्वे विशिष्य प्रकटयति परां देवतामेव तत्र ।
तेनोष[स्ति]स्तः कहोलश्रुतमपि स च तत्संश्रुतं सङ्कलय्य ध्यायेतां ब्रह्म सर्वान्तरमिति फलवत्तत्र सब्रह्मचर्यम् ॥ ३६३ ॥

(अथ कामाद्यधिकरणम् ॥ १६ ॥) सू०—कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३. ३. ३८. ॥

आकाशं ताण्डिनस्तच्छयितमधिजगुर्वाजिनस्तेन विद्या भिद्येतात्रेति चेन्न द्विविध इह यतो ब्रह्मनिर्देश एषः ।
सर्वाधारत्वपूर्वैः परतरविषयस्सामगाकाशशब्दो विश्वेशाधारतोक्त्या सुषिरविषयताऽन्यत्र रूपं तु नान्यत् ॥ ३६४ ॥
छन्दोगानामुपास्यं प्रथितमिह गुणैरष्टभिर्ब्रह्म जुष्टं तच्चान्येषां वशित्वप्रभृतिघटितमित्यस्तु रूपस्य भेदः ।
मैवं यत्तद्वशित्वाद्यपि तदिह भिदा सत्यसङ्कल्पतायाः इत्यैकार्थ्यं निरूढं परमपि दहरोपासनं तद्वदुह्यम् ॥ ३६५ ॥
नन्वाकाशो गुणाद्यैः पर इति दहराधिक्रियायां पुरोक्तं तस्मान्नान्यार्थशङ्केत्यधिकरणमिदं नोज्जिहीतेति चेन्न ।
व्योमानीतं निमित्तं दहरमिदमुपादानमित्युद्गृणन्तः पूर्वं क्षिप्ताः प्रसङ्गात् पुनरपि गमिनाच्छिन्नमूलत्वमत्र ॥ ३६६ ॥

(अथ तन्निर्धारणानियमाधिकरणम् ॥ १७ ॥) सू०—तन्निर्धारणा........प्रतिबन्धः फलम् ॥ ३.३.४१. ॥

उद्गीथादौ क्रियाङ्गे भजनमपि भवेत् पर्णताद्युक्तनीत्या कर्माङ्गं तत्फलोक्तिस्त्विह नुतिरिति गोदोहनन्यायभग्नम् ।
स्वर्गादीनां फलत्वं क्रतुषु तदधिको ह्यत्र वीर्यातिरेकः पर्णत्वादौ न वाक्यं वदति करणतां कर्म चाहानुपास्तौ ॥ ३६७ ॥
उद्गीथे प्राणदृष्टौ क्रतुघटितफलादन्यदुक्तं फलं तत् स्वीकृत्य प्राग्विचारः स्थित इति विहतः पूर्वपक्षोऽत्र मैवम् ।
अत्रत्येऽनङ्गभावे स्थिरनिहितधियस्तत्र विद्यैक्यशङ्का त्यक्त्वाऽङ्गानङ्गभावौ पृथगपृथगिति स्याच्च पूर्वत्र चिन्ता ॥ ३६८ ॥

(अथ प्रदानाधिकरणम् ॥ १८ ॥) सू०—प्रदानवदेव तदुक्तम् ॥ ३. ३. ४२. ॥

कामानेनांश्च सत्यानिति वचनबलाद्धर्म्युपास्तेर्विभक्ता धर्मोपास्तिस्तदर्थं गुणिपरिगणनं तन्त्रतोऽस्त्वित्ययुक्तम् ।
तत्तद्वैशिष्ट्यभेदात् प्रतिविधिगुणिनश्चिन्तनावृत्तिरर्थ्या राजत्वाद्यैः पृथक्त्वाद्भवति हि हविषो दानमावृत्तमिन्द्रे ॥ ३६९ ॥
तत्तद्योगप्रतीतेर्गुणघटितपरोपासना भोगहेतुर्मुक्तिश्च स्यात् क्रमादित्यसद्गुणवचस्यान्यपर्याभिधानात् ।
शास्त्रेऽस्मिन्नासमाप्तेः क्व फलमभिहितं निर्गुणोपास्तिसाध्यं नोच्छास्त्रं च प्रकल्प्यं गुणनियमनतः ख्यातिमांश्चैष पादः ॥
प्रत्येकं मेलनाद्वा दहरगुणगणेऽप्यत्र संचिन्त्यमाने गुण्यावृत्त्यर्थलब्धेः कथमिह तदनावृत्तिशङ्केति चेन्न ।
बुद्ध्यारोहे गुणानां यदवधि गुणिनो रूपमर्थ्यं ततोऽन्यत् विद्यैकान्तं तदावृत्त्यनुघटिततदावृत्तिचिन्ताप्रवृत्तेः ॥ ३७१ ॥

(अथ लिङ्गभूयस्त्वाधिकरणम् ॥ १९ ॥) सू०—लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ३. ३. ४३. ॥

प्रक्रान्ता दहविद्या प्रकटमुपरि च ज्ञायते तैत्तिरीये तस्मादूर्ध्वानुवाकः प्रकृतविषयनिर्धारणार्थोऽस्तु मैवम् ।
तत्तद्विद्योदितैस्तैः परमिह पुरुषं प्रत्यभिज्ञाप्य शब्दैस्तस्मिन्नारायणत्वं वददधिकबलं प्रक्रियातो हि वाक्यम् ॥ ३७२ ॥
वाक्यैस्सर्वार्थतायां दहरभजनमप्यत्र भागीति सार्थस्तल्लिङ्गोपेतभागो न च बहुभिरलं योद्धुमेकं कृतार्थम् ।

नैकस्यास्योपकुर्यात् प्रकरणमलसं किंच सर्वोपजीव्ये तत्त्वे तात्पर्यमत्र स्फुटमिति वितथा तत्परित्यागक्लृप्तिः ॥ ३७३ ॥

आत्मैक्यं देवनैक्यं त्रिकसमधिकता तुल्यनैक्यं त्रयाणामन्यत्रैश्वर्यमित्याद्यनिपुणफणितीरान्द्रियन्ते न सन्तः ।
त्रय्यन्तैरेककण्ठैस्तदनुगुणमनुव्याममुख्योक्तिभिश्च श्रीमन्नारायणो नः पतिरखिलतनुर्मुक्तिदो मुक्तभोग्यः ॥ ३७४ ॥

(अथ पूर्वविकल्पाधिकरणम् ॥ २० ॥ सू०—पूर्वविकल्पः........मानसवत् ॥ ३. ३. ४४. ॥

अङ्गं पूर्वप्रसक्तेष्टकचितसमुपस्थापितस्य क्रतोस्स्यात् बुद्ध्यात्माऽग्निर्मनश्चित्प्रभृतिरपि यथा मानसं द्वादशाहे ।
तत्कार्यस्यानिर्देशादिति न सदुदितो ह्यत्र विद्यात्मकोऽङ्गी श्रुत्याद्यैरेव तस्मिन्नुपकृतिसमताबोधनार्थोऽतिदेशः ॥ ३७५ ॥

कल्प्यो ह्यत्र क्रियात्मा क्रतुरपि तदपि प्रागुपात्ताङ्गशक्त्या वाक्यस्थैश्चानुबन्धैरिह समुपनतो भाति विद्यामयस्तु ।
दूरस्थाकृष्टयोगात् स्ववचनपठिताकृष्टयोगो बलीयानर्थाऽर्थे विधित्वं ह्यनुवदनसमेऽप्याश्रितं तद्वदत्र ॥ ३७६ ॥

(अथ शरीरेभावाधिकरणम् ॥ २१ ॥) सू०—एक आत्मनः शरीरे भावात् ॥ ३. ३. ५१. ॥

तत्कालाकारिणस्स्यादहमिति भजने कञ्चुकस्यात्मनो धीरासक्तेर्मासुपास्स्वेत्युदितवदिति चेन्नान्यथा संनिकर्षात् ।
शुद्धो ह्यात्माऽत्र साध्यः फलमतिरविनाभाविनी बोद्धृकृत्ये बुद्ध्यामत्तेऽन्तरङ्गे सति विधिनियता तत्क्रतुन्यायसिद्धिः ॥
कर्तुर्भोक्तृत्वमात्रं गणयितुमुचितं दृष्टभोगार्थयत्ने स्वर्गाद्यर्थेऽन्यदेहानुगतिरपि परं स्वाधिकारानुविद्धा ।
मुक्त्यर्थे प्राप्त्यवस्थाप्रणिधिकथनतस्तत्क्रतुन्यायवाचा चिन्त्यस्य प्राप्यतार्थो गमित इति कुतोऽतिप्रसङ्गादिशङ्का ॥ ३७८ ॥
विद्याभेदेषु वेद्याकृतिविषमतया यावदुक्तं विचिन्त्ये प्राप्यं सर्वोपपन्नं तत इह कथमप्राप्यचिन्तानिषेधः ।
तस्माद्बद्धस्य चिन्ताऽस्त्विति न कलुषितो नह्यहंशब्दमुख्यः प्राजापत्यात्तु वाक्यादकलुषदशया भावनीयत्वसिद्धिः ॥

(अथ अङ्गावबद्धाधिकरणम् ॥ २२ ॥) सू०—अङ्गावबद्धास्तु........प्रतिवेदम् ॥ ३. ३. ५३. ॥

उद्गीथादेर्विशेषे भजनविधिरसौ स्यात् स्वसान्निध्यगीतेर्मैवं सर्वाङ्गिभूतक्रतुमुखवत इहाशेषसांनिध्यसिद्धेः ।
सामान्यं व्यक्त्यपेक्षक्रियमपि नियमादर्शने व्रीहितावच्छकद्रश्चोद्गीथमात्रं वदति न तु भिदां छागनीतिस्तु नात्र ॥३८०॥

(अथ भूमज्यायस्त्वाधिकरणम् ॥ २३ ॥) सू०—भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ३. ३. ५५. ॥

व्यस्तो वैश्वानरात्मा प्रतिनियतफलोदाहृतेश्चिन्तनीयः कृत्स्नोपास्तौ फलोक्तिस्स्तुतिरिह यदि वा कृत्स्नरूपोऽप्युपास्यः ।
मैवं व्यस्तेषु दोषः पृथगनुकथितस्तत्फलोक्तिस्स्तुतिस्स्याद्दृष्टं ह्यष्टाकपालप्रभृतिषु च तथा तेन चिन्त्यस्समस्तः ॥ ३८१ ॥
सामस्त्यस्यैव योगे द्रढिमवति महावाक्यतात्पर्यवृत्त्या व्यस्तेष्वंशाननूद्य स्तुतिनियततयादान्यपर्यं फलोक्तेः ।
नामादीनामुपास्तौ फलमवधितयाऽपेक्षितं भूमवाक्ये नाप्येवं प्रत्यवायश्श्रुत इति विषमोदाहृतिर्नार्थसिद्ध्यै ॥ ३८२ ॥

(अथ शब्दादिभेदाधिकरणम् ॥ २४ ॥) सू०—नानाशब्दादिभेदात् ॥ ३. ३. ५६. ॥

सर्वासु ब्रह्म वेद्यं फलमपि खलु तद्ब्रह्मविद्येति चाख्या ध्यानाद्युक्त्येकलक्ष्ये विधिरपि भजनं सर्वविद्यैक्यमित्थम् ।
तन्नाख्यारूपभेदात्तदुपहितविधौ तेन वैशिष्ट्यसिद्धेर्मिश्रं मध्वादिविद्याफलमिह च पृथक्काम्यविद्यासु चैवम् ॥ ३८३ ॥
नानाशब्दादिभेदादिति कथमवदत् सूत्रकृच्छब्दसाम्ये न ह्येते यागदानादय इव भिदुरा भक्तिविश्रान्तिसिद्धेः ।
सत्यं शब्दस्य भेदस्त्वयमुपचरितो रूपभेदद्रढिम्ना ज्ञानं यच्चाविधेयं करणमिह जगुस्तन्निरासेऽभिसन्धिः ॥ ३८४ ॥

यद्वा शब्दादिभेदादिति तु कथयता सूत्रकारेण सम्यङ् न्यासोपासे विभक्ते यजनहवनवच्छब्दभेदादभाक्तात् ।
आख्यारूपादिभेदश्श्रुत इतरसमः किंच भिन्नोऽधिकारश्शीघ्रप्राप्त्यादिभिस्स्याज्जगुरिति च मधूपासनादौ व्यवस्थाम् ॥

(अथ विकल्पाधिकरणम् ॥ २५ ॥) सू०—विकल्पोऽविशिष्टफलत्वात् ॥ ३. ३. ५७. ॥

ज्योतिष्टोमाग्निहोत्रप्रभृतिवदधिकानन्दसिद्ध्यै समुच्चित्यैतास्स्युर्ब्रह्मविद्या न च भजनविधिः कश्चिदेकं प्रति स्यात् ।
कर्तुं ताः कालभेदे क्षममिति न मिथो वासनास्थैर्यबाधात् संपूर्णब्रह्मलब्ध्यै पृथगिह च विधिः प्रायणान्ते समाधौ ॥
रूपादीनां विशेषैर्ननु परभजनं नैकरूपं विभक्तं सामग्रीभेदतस्तत्फलमपि विषमं सम्मतं न्यायतस्स्यात् ।
न स्यात् सर्वासु विद्यास्वपि हि फलतया वक्ष्यते भोगसाम्यं प्राप्यैक्यं च प्रसिद्धं बहुसरणिजुषां लोकतो वेदतश्च ॥

(अथ यथाश्रयभावाधिकरणम् ॥ २६ ॥) सू०—अङ्गेषु यथाश्रयभावः ॥ ३. ३. ५९. ॥

तत्तद्विद्यासु तादृक्फलतरतमतां वारयित्वा प्रसङ्गात् प्रागुक्तोद्गीथविद्याफलमथ पुनराक्षिप्य गाढीकरोति ।
माभूदुक्तं स्ववाक्ये फलमिह तु न सा पर्णमय्यादिनीतिः स्पष्टा खल्वत्र विद्याफलकरणतया वर्तमानोक्तितोऽपि ॥
तादर्थ्यं नात्र कर्मश्रुतिरवगमयेदाश्रयालम्बमात्राद्विद्याहानौ च युक्तं प्रतिविधिवचनं तत्फलार्थप्रसङ्गे ।
तारे सोपासनेऽस्तु स्तवनमनुगमात्तावता सा तु नाङ्गं प्राग्वक्तव्यस्य हित्वा वच इदमुपरि स्थापनीयप्रसक्त्यै ॥ ३८९ ॥
विद्यैक्योद्गीथविद्याद्वितयविभजनप्राणविद्यैकभावास्सर्वास्वानन्दतादेर्गुणिवदनुगतिः प्राणवासस्त्वदृष्टिः ।
शाण्डिल्यैक्यं विभज्य स्थितिरहरहमोस्संभृतेस्स्थानसीमा पुंविद्याया विभेदोऽध्ययननियतता शं न इत्यादिकानाम् ॥
हानाद्यन्योन्ययोगस्तदुचितसमयो देवयानादिसाम्यं सर्वत्रास्थूलतादिव्यतिहरणमथानेकशिष्यश्रुतानाम् ।
दह्रोपास्त्येकभावो गुणफलविधिरुद्गीथमाश्रित्य दृष्टौ गुण्यावृत्तिर्गुणार्था निखिलपरतरोपास्तिवेद्यावमायः ॥ ३९१ ॥
विद्यारूपा मनश्चित्प्रभृतय उचितज्ञानरूपक्रतुस्थाः क्षेत्री शुद्धोऽनुचिन्त्यः क्रतुगुणसकलोद्गीथपूर्वेषु दृष्टिः ।
सामस्त्येनैव वैश्वानरभजनमथानेकविद्योपपत्तिर्मोक्षार्थानां विकल्पः पुनरनियतिरुद्गीथदृष्टेरिहोक्ते ॥ ३९२ ॥

॥ इति तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥ अथ तृतीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥

कर्म प्राक्चिन्तयित्वा ननु परममथ ब्रह्म जिज्ञास्यमुक्तं पादं विद्याङ्गतोक्तिः पुनरिह वितथाऽनेकधा त्याज्यतोक्तेः ।
मैवं कर्मैव तत्तद्गुणयुतविनियुक्त्यन्यभावेन भिन्नं विद्यानिष्पत्तिहेतुः किमपि च सुकृतं स्यान्निवृत्तैकसंज्ञम् ॥ ३९३ ॥
त्यागः काम्यक्रियाणां क्वचन परविदः क्वाप्यनर्हः क्रियाणां स्वैकाधीनत्वबुद्धेः क्वचिदनुपधिकस्वार्थबुद्धेश्च गीतः ।
अत्राहिंसादिकानामघविहतिकृतां सर्वसाधारणानां ब्रूते वर्णाश्रमादिप्रतिनियतिमतामप्युपास्त्यङ्गभावम् ॥ ३९४ ॥

(अथ पुरुषार्थाधिकरणम् ॥ १ ॥) सू०—पुरुषार्थोऽतश्शब्दादिति बादरायणः ॥ ३. ४. १. ॥

कर्ताऽऽत्मा कर्मणां यस्तदधिकमिह न ब्रह्म तस्मान्मखादौ तद्बुद्ध्यैवोपयुक्तास्स्युरुपनिषद इत्यर्धमीमांसकोक्तौ ।
जीवान्यब्रह्मचिन्तात्मकभजनविधौ कर्मणामङ्गभावं प्राह क्षितान्यलिङ्गैः कलुषशमनतस्सत्त्वसंवर्धकानाम् ॥ ३९५ ॥
पादैरत्रैवमेकादशभिरपि परं ब्रह्म वेद्यं निरूढं भूयः किं क्षुद्रलिङ्गैर्गगनलिपिनिभैः क्षोभ्यते ब्रह्मविद्या ।
सत्यं तत्तादृगल्पश्रुतमतिकलहत्रासितच्छात्रडिम्भस्तोमक्षेमाय जैमिन्यहृदयकथितं पक्षमुत्क्षिप्य हन्ति ॥ ३९६ ॥
कुर्वन्नेवेति वाक्यं परविदि नियताचारतोक्तिस्सहत्वेऽन्वारम्भो धीक्रियाभ्यामपि न नियमयेदङ्गतामङ्गितां वा ।

विद्यापूर्वं क्रियाणां करणमनुवदद्वाक्यमन्यार्थमुक्तं न ह्येतद्ब्रह्मविद्यामनुवदति न चोद्गीथविद्याक्रियाङ्गम् ॥ ३९७ ॥
स्वाध्यायप्राप्तये ह्यध्ययनमुदितमाधानवन्नोत्तराङ्गं विद्याङ्गं चार्थबोधो भवतु यदधिका सा स्वरूपैः फलैश्च ।
नित्यात्मज्ञानमात्रं क्रतुषु नियमतोऽपेक्षितं नान्यविद्या काम्यत्यागस्सविद्ये कथमिह भविता साऽपि यद्यङ्गमेषाम् ॥ ३९८ ॥
नाङ्गं विद्या मखादेर्न हि तदधिकृतेष्वेव तामामनामः स्यात्तत्तत्कर्मणां सेत्यपि न बहुविधाद्वैपरीत्योपदेशात् ।
जाबालैरूर्ध्वरेतोविधिरपि पठितोऽनूद्यतेऽन्यैश्च तस्मात् प्राप्तिर्ग्राह्याऽन्यथाऽपि स्वयमिह तु विधिस्तन्निषेधस्सरागे ॥

( अथ स्तुतिमात्राधिकरणम् ॥ २ ॥ ) सू०—स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ ३. ४. २१. ॥

जुह्वादिस्तोत्रनीत्या भजतु रसतमाद्युक्तिरङ्गस्तुतित्वं मैवं तत्तद्विधानप्रकरणरहितापूर्वनिर्देशयुक्तेः ।
तत्तद्दृष्टेर्विधानं विविधमिह समालक्षि चैतत्समीपे तेनानन्यार्थशिष्टे फलवति च विधिर्युज्यते कल्प्यमानः ॥ ४०० ॥
किंच प्राप्तेरभावान्न तदनुवदनं नाधिरोप्य स्तुतिर्वा युक्ता विध्येकवाक्ये गतिरियमगतेस्साऽत्र नासक्तिहानेः ।
उत्कर्षः कल्प्यते चेदगतिकविषये तत् प्रसह्य प्रसह्य मध्ये विद्याविधीनां वचनमिदमिति स्यात्तु विध्यर्थमेतत् ॥
विध्यर्थत्वेऽपि युक्ता स्तुतिरियमसतः कीर्तनादित्ययुक्तं दृष्ट्युद्देशेऽतिचारादथ च विशयनं स्यादिति त्वभेकोक्तिः ।
नित्येऽस्मिन्नप्रमाणं प्रसजति निगमो युक्तिवार्यत्वपक्षे त्वित्थंभावे बुभुत्स्ये वच इह फलवद्दृष्टिविध्यर्थमेव ॥ ४०२ ॥

( अथ पारिप्लवार्थाधिकरणम् ॥ ३ ॥ ) सू०—पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ ३. ४. २३. ॥

विद्याख्यानभेदा विधिमहिमभृतास्सन्तु पारिप्लवार्था न स्युर्विद्याविधानैः प्रकरणपठितैरेकवाक्यत्वदृष्टेः ।
मन्वाद्याख्यानमात्रं भवति च कथितं तत्र पारिप्लवार्थं तेनाकाङ्क्षानिवृत्तौ न तदधिकपराख्यानतादर्थ्यक्लृप्तिः ॥ ४०३ ॥

( अथ अग्नीन्धनाद्यधिकरणम् ॥ ४ ॥ ) सू०—अत एव चाग्नीन्धनाद्यनपेक्षा ॥ ३. ४. २५. ॥

यज्ञादेरङ्गभावान्न तदनधिकृतेष्वङ्गिनोऽधिक्रिया स्याद्विद्वैवं नोर्ध्वरेतस्स्विति न बहुविधस्वाश्रमाङ्गार्हतोक्तेः ।
विद्यायोगश्चतुर्णां विधिरपि च समश्श्रूयते स्मर्यते च प्रायेणौचित्यभूम्ना मुनिभिरभिहितं क्वापि मोक्षाश्रमत्वम् ॥ ४०४ ॥

( अथ सर्वापेक्षाधिकरणम् ॥ ५ ॥ ) सू०—सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ ३. ४. २६. ॥

त्यक्ते यज्ञादिधर्मे परभजनविधेरूर्ध्वरेतस्सु दृ[ष्ट्या] ष्टा विद्या तेनानपेक्षा गृहवति च भवेदित्यनालोचितोक्तिः ।
यज्ञेनेत्यादिकाभिश्श्रुतिभिरवगता ह्यस्य सा तत्प्रसाध्या जिज्ञासार्थत्ववादो जिगमिषति पदेत्यादिनीत्या निवर्त्यः ॥ ४०५ ॥
नन्विच्छार्थत्वहानिर्जिगमिषति पदेत्यादिके गत्यभावाच्छ्रुत्युक्तेऽस्मिंस्तथा नेत्यसदिह च यतो गत्यभावस्समानः ।
इच्छा स्याद्धीविशेषात्तदनुपजनने कर्मभिस्सा न साध्या जिज्ञासां प्राप्तुमिच्छोर्न च न भवति तज्ज्ञानमिष्टं पुरैव ॥
नन्वत्रेच्छानुवृत्तिं प्रति विहितमिदं कर्म योज्यं ततः किं नेच्छार्थं धीविशेषप्रजननमुदितं तावता वारितं स्यात् ।
ज्ञानार्थं कर्मविध्यन्तरमपि विविधं नापलापक्षमं ते निद्धयानन्यायतोऽतस्त्वनुवदति विदेरिष्टतां सम्प्रयोगः ॥ ४०७ ॥

( अथ शमदमाद्यधिकरणम् ॥ ६ ॥ ) सू०—शमदमाद्युपेतः........अवश्यानुष्ठेयत्वात् ॥ ३. ४. २७. ॥

यज्ञादिव्याप्टतत्वादनिभृतकरणे सर्वकालं गृहस्थे शान्त्यादीनामयोगात्तदितरनियतास्ते गुणा इत्ययुक्तम् ।
प्रव्रज्यादिस्थितानामपि तदुपधिकानेकधर्मप्रवृत्तेस्तत्सर्वं सह्यते चेत् सह तदपि फलाद्युज्झनं चात्र तुल्यम् ॥ ४०८ ॥

प्रज्ञातस्वापराधाः प्रभुमनुतपने लोकसिद्धैरुपायैरात्मार्हैरर्चयन्तः क्रमशमितरुषस्तस्य सेवां लभन्ते ।
इत्थं नः शास्त्रसिद्धैरिदमनिदमिति स्वाधिकारे विभक्तैर्निष्प्रत्यूहः प्रसादो निरुपधिसुहृदः श्रीधरस्याधिगम्यः ॥ ४०९ ॥

( अथ सर्वान्नानुमत्यधिकरणम् ॥ ७ ॥ ) सू०—सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ३. ४. २८. ॥

आहारस्य व्यवस्था न भवति वचनात् प्राणविद्याधिकर्तुः सामान्यस्थो निषेधो बलवति हि विधौ संकुचेदित्ययुक्तम् ।
अङ्गत्वेनाविधेस्स्यादनुमतिवचनं प्राणभङ्गप्रसङ्गे पश्यैतत्प्राणनिष्ठादधिकमहिमनि ब्रह्मनिष्ठेऽप्युपस्तौ ॥ ४१० ॥

( अथ विहितत्वाधिकरणम् ॥ ८ ॥ ) सू०—विहितत्वाच्चाश्रमकर्मापि ॥ ३. ४. ३२. ॥

यज्ञादेः कर्मणो हि श्रुतिभिरभिदधे ब्रह्मविद्याङ्गभावस्तस्मादब्रह्मनिष्ठे तदननुसरणात् स्वैरितैवास्तु मैवम् ।
नित्यत्वस्यापि सिद्धेस्तदुचितविनियुक्त्यन्यभावानुसारात्तन्त्रं काम्याग्निहोत्रादिवदिह परविलित्यवर्गेऽपि योज्यम् ॥ ४११ ॥

( अथ विधुराधिकरणम् ॥ ९ ॥ ) सू०—अन्तरा चापि तु तद्दृष्टेः ॥ ३. ४. ३६. ॥

दारालाभे विरक्तैर्यदिमनि च भवेदन्तरेणाश्रमान्यस्तस्मिन्निश्शेषधर्मत्यजि भवतु कथं ब्रह्मविद्येति चेन्न ।
सामान्यैर्वर्णधर्मैर्गुणनियतियुतैस्सा हि तत्रापि साङ्गा भीष्मादौ दृष्टमेतद्भवति तु वृषले गत्यभावादभावः ॥ ४१२ ॥

( अथ तद्भूताधिकरणम् ॥ १० ॥ ) सू०—तद्भूतस्य तु........तद्रूपाभावेभ्यः ॥ ३. ४. ४०. ॥

आरूढो नैष्ठिकादित्रयमथ पतितस्तत्परावर्तनाद्यस्तत्रापि ब्रह्मविद्या भवतु सहकृता न [दृशा] तदर्हैस्स्वधर्मैः ।
मैवं यद्यप्यभीच्छन्त्युपपतनमिदं शोधनं चास्त्यनेकं सर्वार्हं कीर्तनाद्यं तदपि तदुचितो नैष ताद्दृङ्निषेधात् ॥ ४१३ ॥
प्रायश्चित्तं वदन्ति ह्युपपतनमहापातयोर्ब्रह्मयोगं प्राप्ते पाते प्रमादाद्विदधति मुनयो योगिनां योगमेव ।
तस्मादारूढपातेऽप्यधिकृतिरिरिति नाचोदनीयं हि शास्त्रे यावज्जीवं तु तन्निष्कृतिरिति नियमस्सूत्रकाराद्यभीष्टः ॥ ४१४ ॥
यो बालं हन्ति यः श्रीं शरणमुपगतं यश्च यो वा कृतघ्नः प्रायश्चित्तैर्विशुद्धान्यपि जगदुरिमान् साधुसंस्पृष्ट्यनर्हान् ।
स्मृत्याचारानुसारादिह च गतिरियं दर्शिता सूत्रकारैः शास्त्रं नश्शासनीयं यदि भवति तदा संप्लुता धर्मसेतुः ॥
ब्रह्मांशत्वे समाने गुणविषमतया शुद्ध्यशुद्धिस्वभावैर्देहैर्योगादनुज्ञापरिहरणमपि प्रेक्षणस्पर्शनादेः ।
इत्येवं सूत्रितं प्राक् पुनरिह विविधालेपकक्षोभशान्त्यै सम्यग्ज्ञातात्मनोऽपि स्वननुमसुचितनाचारतः प्रत्यबोधि ॥ ४१६ ॥

( अथ स्वाम्यधिकरणम् ॥ ११ ॥ ) सू०—स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ३. ४. ४४. ॥

उद्गीथादावुपास्तिर्भवति हि फलिना यज्वनैवात्र शक्या तस्मात्सत्कर्तृकाऽसाविति यदि न परिक्रीतकर्माश्रयत्वात् ।
ऋत्विक्साध्या यथाऽन्ये गुणफलविधयोऽनूद्यते चैवमेषा शक्यत्वं नाप्युपाधिर्विधिबलनियतेः स्वामिभृत्यक्रमोऽत्र ॥

( अथ सहकार्यन्तरविध्यधिकरणम् ॥ १२ ॥ ) सू०—सहकार्यन्तरविधिः........विध्यादिवत् ॥ ३. ४. ४६. ॥

मन्तव्यत्वे श्रुते सत्यथ मुनिरिति वागस्तु तस्यानुवादः कश्चिन्न ह्यत्र दृष्टो विधिरिति न पुरा [रः] पण्डितत्वस्य लब्धेः ।
ऊहापोहार्हता हि श्रवणमननतोऽनन्तरं पण्डितत्वं मौनस्थ्यातिः प्रकृष्टं मनन इति विभौ धारणाद्युक्तिरेषा ॥ ४१८ ॥

( अथ अनाविष्काराधिकरणम् ॥ १३ ॥ ) सू०—अनाविष्कुर्वन्नन्वयात् ॥ ३. ४. ४९. ॥

शिष्टं बाल्येन तिष्ठासनमपि विदुषो बालकृत्यं तदस्तु प्राप्तुं बाल्यस्य भावो न तु सुशक इति स्वैरिताऽस्येति चेन्न ।
दुश्चारित्रादमुं नाविरत इति वचस्सन्निरुन्धे ह्यतोऽस्मिन्माहात्म्यं स्वं निगूहेदिति मुनिविहिते बाल्यविध्याशयस्स्यात् ॥

( अथ ऐहिकाधिकरणम् ॥ १४ ॥ ) सू०—ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ३. ४. ५०. ॥
भोगार्थोपासनानां स्वजनकसुकृतैस्तत्क्षणादुद्भवस्स्यात् स्वर्गादिस्तत्र देहे न घटत इह तु स्यान्तशुद्धयोपपत्तिः ।
स्नानप्रायत्यनीतिस्तत इति न पुरा विघ्नसम्भावनोक्तेः कारीर्यादौ तदर्हस्स्वगुणविरचितेऽप्यस्मिन् विघ्नः कदाचित् ॥ ४२० ॥

( अथ मुक्तिफलाधिकरणम् ॥ १५ ॥ ) सू०—एवं मुक्तिफलानियमः........धृतेः ॥ ३. ४. ५१. ॥
अस्त्वन्यत्रान्तरायः प्रबलतममिदं सात्त्विकत्यागयुक्तं कर्म प्रोक्तं निवृत्त्याह्वयमिति सपदि ब्रह्मविद्यां विदध्यात् ।
मैवं तस्माद्बलीयान्यदि भवति परब्रह्मभक्तापराधस्तच्छान्तौ तत्प्रवृत्तिस्स यदि न झटिति स्यात् परोपास्तिलाभः ॥ ४२१ ॥
विद्यार्थत्वं क्रियाणां व्यभिचरणवशान्नेति शङ्कापनुत्त्यै प्रत्यूहानां च तूर्णं प्रशमनमुचितं सर्वदेति प्रसिद्ध्यै ।
निष्प्रत्यूहस्य सद्यः फलमिति च सतां तोषहेतोरमुष्मिन्पादान्ते न्यासिपातामनियमविषयौ शास्त्रकर्त्रोऽधिकारौ ॥ ४२२ ॥
प्रत्यूहस्य प्रसङ्गः क्षम इति परवित्कर्मणां तद्विधृत्यै भोगार्थोपास्तिहेतुष्वयमनुकथितः किं मुधाऽत्रेति चेन्न ।
काम्ये निर्विघ्नबुद्ध्या पतति मतिरतस्तत्र वैराग्यभूम्ने तत्प्रत्यूहप्रसक्तिर्भवति फलवती स्याच्च विद्यार्थकाम्यम् ॥ ४२३ ॥
विद्या कर्माङ्गिका स्याद्रसतममुखधीश्चोदिता प्राप्त्यभावादाम्यानानां च विद्याविधिसविधजुषां तद्विधानार्थतैव ।
विद्या साङ्गोर्ध्वरेतस्स्वपि गृहवति सा यज्ञदानाद्यपेक्षा शान्त्याद्यर्हो गृहस्थोऽप्यविपदि विदुषोऽप्यन्नशुद्ध्यैव सिद्धिः ॥
एकं विद्याश्रमार्थं विधुरमवि[पि]युतं विद्ययाऽऽहुस्त्त्युतं न क्रत्वङ्गं दृष्टिकृत्विक्कृतिरथ मुनिता चोदिता ध्यानसिद्ध्यै ।
बाल्यं शक्त्यादिगुप्तिर्बलवदभिहतैः कर्मभिर्नान्यविद्या तद्वन्मुक्त्यर्थविद्या स्वजनकसुकृतैरित्युवाचात्र पादे ॥ ४२५ ॥
वाक्यार्थज्ञानमात्रं कतिचन कुदृशो मुक्त्युपायं गृणन्ति ज्ञानं कर्मेति युग्मं करणमिति समुच्चित्य मन्यन्त एके ।
कर्मप्राधान्यमन्ये निजगदुरपरे मुक्तिमिच्छन्त्यसाध्यां सर्वे तेऽप्यत्र कर्माङ्गकभजनविधिस्थापनोक्त्या निरस्ताः ॥ ४२६ ॥
यद्दुःखं वर्तते तत्क्षणभिदुरतया न स्वयत्नोपरोध्यं नातीतार्थं च यत्नो न च सुपरिहरं भाविहेतौ समग्रे ।
दुःखात्यन्तोपरोधे करणविधिरतो व्यर्थ इत्यर्धरम्यं प्रायश्चित्त्या कृतानां परमकरणतो दुःखसामग्र्यपोहात् ॥ ४२७ ॥
राजद्विष्टादि सर्पाद्यपि परिहरसि च्छत्रपूर्वं बिभर्षि प्रायश्चित्तप्रवृत्तौ फलति दुरितमित्येवमोहामिहेच्छ ।
उत्प्रेक्षारूढभाव्यापजयशमनतः स्वोक्तिसाफल्यमिच्छन् पश्यंश्चाबालतिर्यग्भयचकितगतिं जोषमित्थं जुषस्व ॥ ४२८ ॥
साध्यं वा साधनं वा स्वविहतविपथैर्दुर्निरूपं वदन्तस्तद्वादे किं प्रवृत्ताः किमिति च विदधत्यन्वहं भोजनादीन् ।
मुक्तेर्नित्यत्वसिद्ध्या भजनमफलमित्यप्यसत् प्रागसिद्धेः साङ्ख्यास्तत्रानुयोज्यास्सकरणदशया नित्यमुक्तिं गृणन्तः ॥
मोक्षाभावे मुधा स्यात् सपरिकरमिदं साधनं चिन्त्यमानं मुक्तिश्चेद्भ्रान्तिसिद्धा भ्रम इह भविता यावदात्मस्वरूपम् ।
क्षेत्रज्ञं नित्यमुक्तं कथयितुरफलः साधनाध्याय इत्थं प्रध्वंसात्मा हि मुक्तिर्नयविदभिमता सा तु भावात्मिका नः ॥
सन्तत्यात्मा कपालप्रभृतिबहुविधावस्थयाऽन्यत्र नाशो धीसङ्कोचप्रणाशो विकसनमतथाभूतमात्रागमात्स्यात् ।
मन्यन्तेऽन्ये तु धारावहनमतिनयात् सन्ततिर्मुक्तबुद्धेस्सामग्री चेश्वरेच्छाप्रभृतिसमुदयस्स्यादनावृत्तिरेवम् ॥ ४३१ ॥

॥ समाप्तस्तृतीयाध्यायः ॥ ३ ॥

॥ अथ चतुर्थाध्यायस्य प्रथमः पादः ॥ १ ॥

इत्युत्पत्तिक्रमेण प्रथममभिहितो मुक्त्युपायस्सहाङ्गैस्तत्साध्यं सूत्रकारः फलमथ विदुषः पर्वभेदैर्व्यनक्ति ।
स्थूले देहेऽस्य सिद्ध्येद्यदिह वदति तत् पादयुग्मेन पूर्वं निष्क्रान्तस्याथ यत्स्यात् परिगणयति तत् पादयुग्मान्तरेण ॥
सूक्ता प्रागेव विद्या किमिति पुनरिमां वक्ति यद्यस्ति शेषं ब्रूतामेतच्च पूर्वं न हि तदिह फले सङ्घटेतेति चेन्न ।
मुक्तैरन्यैरसिद्धिं प्रकृततदविनाभावमासन्नसिद्धिं मुक्तावस्थासमं च स्थिरभजनरसं व्यङ्क्तुमत्रानुबन्धः ॥ ४३३ ॥

( अथ आवृत्त्यधिकरणम् ॥ १ ॥ ) सू०—आवृत्तिरसकृदुपदेशात् ॥ ४. १. १. ॥

शुद्धैरुत्कृष्टधर्मैस्सदनपचरणे ब्रह्मविद्या भवित्रीत्युक्तं पूर्वाधिकारे विमृशति तु परं तत्स्वरूपं यथावत् ।
प्रत्यक्षं वा स्मृतिर्वा सकृदिदमसकृद्वेति नोक्तं पुरस्ताद्यावज्जीवानुवृत्तिप्रभृति च तदिहापौनरुक्त्यं सुबोधम् ॥ ४३४ ॥
ज्ञानं मुक्तेरुपायः श्रुतिभिरभिहितं तस्य सङ्ख्या त्वनुक्ता सौकर्यं स्यात्सकृत्त्वे स्वत इह च भवेच्चारितार्थ्यं विधीनाम् ।
सम्यक्त्वात्तद् ध्रुवत्वं न पुनरनुगमात् प्रोक्तमित्यप्यसारं सामान्योक्तेर्विशेषे सति पशुनयतस्तत्र विश्रान्तिसिद्धेः ॥ ४३५ ॥
किं चाग्नेय्यादिनीत्या विदिरिह वदति ध्यानशब्दार्थमेव ध्याने चोपासनोक्तिः परभजनतया वक्ति सेवात्मकत्वम् ।
ऐकार्थ्यं विद्युपास्योर्व्यतिकरिततया श्रूयते च प्रयोगः कार्ये हेतौ च भक्तेः क्वचिदुपचरितो भक्तिभेदत्ववादः ॥
योगोद्युक्तेषु यस्स्यात् स्ववरणविषयस्तेन लभ्यः परात्मा ग्राह्यत्वं च प्रियत्वात्तदपि हि गुणतो भक्तिरेवं श्रुतैव ।
सा च प्रीत्यात्मिका धीः क्वचिदतिशयिते स्मृत्यबाधोऽप्यतस्स्यात् प्रोक्ता चैषा ध्रुवानुस्मृतिरनुवहनात्तैलधाराक्रमेण ॥
रागादादौ प्रवृत्तिश्श्रवणमननयोर्ध्यानमेकं विधेयं तत्र द्रष्टव्यशब्दो विशदतमतया वक्ति वैशिष्ट्यमात्रम् ।
शब्दोत्थं दर्शनं ये विषयमकथयन् वेदनोक्तेरमीषां व्याघातादिप्रपञ्चस्त्रयमिह निपुणैस्सूक्ष्ममन्वीक्षणीयः ॥ ४३८ ॥
ध्याने वैशद्यमात्रादुपचरणमिदं दृष्टिशब्दप्रवृत्तिस्तुल्यं तत्त्वन्मतेऽपि ह्यभिलपति धियं चाक्षुषीं दृष्टिशब्दः ।
घ्रातृस्प्रष्ट्रादिवद्दृष्ट्यभिवदनमिदं चक्षुषा भानशून्ये गौणं तत्तुल्यभावे सति बहुनयवानस्मदीयस्तु पक्षः ॥ ४३९ ॥
न द्वारद्वारिक्लृप्तिः कथमपि घटते विश्रमश्चेद्विशेषे सामान्यात्मा विशेषैर्लघु च न गुरुभिः कर्तुमैक्ये विकल्पम् ।
अर्थैक्ये दर्शनोक्त्या स्मृतिरुपचरिता युज्यते स्पष्टयसिद्ध्यै स्मृत्युक्ता दर्शनस्योपचरणमसदित्यन्यदेतत्फलान्नः ॥ ४४० ॥
कृच्छ्रादौ शक्तिहीनो दृढपरितपनस्संयमार्हश्च कुर्यात् सर्वार्थां केशवानुस्मृतिमिति घटते तद्विकल्पो यथार्हम् ।
सामान्यात् सर्वदोषेष्वियमुपकुरुते सर्वनैमित्तिकानां मुक्तेरप्यत्र मूलं मुनिरमनुत तां तादृशध्यानरूपाम् ॥ ४४१ ॥
नन्वेवं ये मुकुन्दं शरणमुपगता वर्जिता ध्यानयोगैस्ते चातिक्रम्य मृत्युं यमिन इव परं धाम यान्तीत्युशन्ति ।
सत्यं तेऽपीति शब्दान्नियतविषययोर्गौरवे लाघवे च प्राप्तार्थं ध्यानशास्त्रं प्रणिधिसहृदशायोगिभिर्योगविद्भिः ॥ ४४२ ॥
धर्मो वर्णादियोग्यः कलुषशमनतस्सत्त्ववृद्ध्योपकारी भक्तेस्तद्वत् प्रपत्तिस्त्वगतिकसमयेप्वन्तरायापहन्त्री ।
सानुक्रोशे हि शक्ते शरणवरणतस्सर्वसाध्यं सुसाधं मोक्षाकाङ्क्षे प्रपद्ये शरणमहमिति क्वापि मन्त्रे श्रुतं च ॥ ४४३ ॥

( अथ आत्मत्वोपासनाधिकरणम् ॥ २ ॥ ) सू०—आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ४. १. ३. ॥

जीवादत्यन्तभिन्नस्स विभुरभिदधे लक्षणैस्साधनान्तैर्मुक्त्यर्थोपासनेऽस्मिन्मुषिततमसि न ब्रह्मदृष्ट्यादियुक्तिः ।
तत्त्वज्ञे वीतरागे तदिह न घटते सोऽहमस्मीत्युपास्तिस्तन्न स्वात्मान्तरात्मन्यहमिति वचसोऽप्यत्र मुख्यप्रवृत्तेः ॥ ४४४ ॥

वस्विन्द्रादेरुपास्तौ प्रकृतिशबलितस्वान्वितेक्षा पुरोक्ता शुद्धस्स्वात्मा च चिन्त्यः क्वचिदिह तु विभुस्तादृशा स्वेन युक्तः ।
व्यक्तिर्जीवेशभेदे व्यधिकरणपदैर्भावने स्यात्तथाऽपि ब्रह्मायत्तस्वरूपप्रमितिसुदृढतासिद्धयेऽहंग्रहोक्तिः ॥ ४४५ ॥

ऐक्योपास्तावहं त्वं त्वमहमिति मतिर्निर्विशेषे कथं स्यात् भेदाभेदाभिलापः करकमणिकतद्व्योमनीत्या न मुख्यः ।
मत्तुल्यस्त्वं त्वयाऽहं सम इति वदतां नोपचारोऽपि युक्तस्तस्मात् सर्वान्तरात्मन्ययमहमिति धीराकृतिन्यायसिद्धा ॥

अद्वैतं द्वैतहानौ न भवति सुवचं तत्प्रतिद्वन्द्विकत्वाद्द्वैतं चाद्वैतगर्भं द्वितयमपि हि तत्स्वस्वरूपादभिन्नम् ।
द्वैताद्वैतं च तादृक्तदुभयनियमानुज्झनादेव सिध्येत् सर्वं स्थाने स्थितं स्यात् प्रमितिपरवतां नेतरेषां तु किंचित् ॥

नन्वद्वैते निषेध्यो गगनकुसुमवद्भ्रान्तिसिद्धोऽस्तु भेदो मैवं सत्यादभिन्नः स खलु न यदि तद्भ्रान्तिसिद्धत्वसिद्धिः ।
भिन्नत्वं चास्य तस्माद्यदि भवति मृषा विद्धि दत्तोत्तरं तत् सत्यं चेत्सत्यभेदोपगतिरिति मुधा दूरतो धावनं वः ॥

( अथ प्रतीकाधिकरणम् ॥ ३ ॥ ) सू०—न प्रतीके न हि सः ॥ ४. १. ४. ॥

नामादिब्रह्मनिष्ठावपि तदहमिति प्रत्ययः पूर्ववत् स्यात् ब्रह्मध्यानत्वसाम्यादिति यदि न न खल्वन्तरात्मा प्रतीकः ।
न ब्रह्मण्यन्यदृष्टिः कथमपि घटते तस्य सर्वाधिकत्वादन्यस्मिन् ब्रह्मदृष्टौ परमिह नियतैर्लक्षणैस्तद्ग्रहोऽर्थ्यः ॥ ४४९ ॥

आत्मन्यब्रह्मभूते भवतु फलवती कुत्रचिद्ब्रह्मदृष्टिर्नैषा वस्तुव्यवस्थां शिथिलयति नरे वैनतेयत्वधीवत् ।
एतावन्मात्रमोहादिदमहमिति तु स्थापयन् क्षिप्रमृच्छेदिन्द्रत्वारोपदर्पोद्धतनहुषमहाभोगिसंस्थामवस्थाम् ॥ ४५० ॥

( अथ आदित्यादिमत्यधिकरणम् ॥ ४ ॥ ) सू०—आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ४. १. ६. ॥

तादर्थ्याद्देवतानां फलकरणतया कर्मणश्चोदितत्वादादित्यादौ निकृष्टात्मनि भवतु समुत्कृष्टकर्माङ्गदृष्टिः ।
मैवं कर्म प्रधानं विहितमपि यतस्तत्समाराधनं तत् तत्प्रीता देवतैव प्रदिशति फलमित्यर्थतस्सा प्रधानम् ॥ ४५१ ॥

अन्यस्मिन्नन्यदृष्टेर्विधिरिह घटतामन्यथाख्यातिपक्षे याथार्थ्यं सर्वबोधानुगतमिति मते युज्यते नान्यदृष्टिः ।
तन्नात्राद्ये हि न स्याद्विमतिरविमता भ्रान्तिनीतिः परस्मिन् तादृग्भेदाग्रहोपप्लुतमतियुगलस्थापनायां नियोगात् ॥ ४५२ ॥

दृष्टव्यापह्नवे न भ्रमदनुघटिता दृष्टिरद्वैतमोहस्स्यादुत्कृष्टापराधस्तत इह [विहिता] घटिता तादृशत्वस्य दृष्टिः ।
तादृग्दृष्टौ न दोषस्तत इह कतिचित्तार्क्ष्यदृष्टादिनीत्या द्वेधाऽन्यत्रान्यदृष्टिर्न किमनधिगता व्यक्तितो जातितश्च ॥ ४५३ ॥

मुख्यं ब्रह्मैकमेवेत्यवहितमनसां ब्रह्मदृष्टिः कथं स्यादेकत्वेनेति केचिन्न हि बलिनि विधौ शङ्कनीयो विरोधः ।
स्वेच्छापूर्वं द्विचन्द्रभ्रमवदिह भिदाकल्पनामाहुरन्ये बंभ्रम्यन्ते यथा च श्रुतिषु बहुविधं ब्रह्म भातीति बालाः ॥ ४५४ ॥

( अथ आसीनाधिकरणम् ॥ ५ ॥ ) सू०—आसीनस्संभवात् ॥ ४. १. ७. ॥

आसीनस्यैव योगश्श्रुतिषु न ददृशे ध्यानमाहुस्सदेति न्यासश्चेलाजिनादेर्नियमविधिकृतः पाक्षिकासीनतायाम् ।
तस्मादेतद्घटेत स्थितिगतिशयनेष्वप्रकम्प्येन्द्रियस्येत्यप्राप्तं यत्ननिद्रान्वयिनि कथमविच्छिन्नधीसन्ततिस्स्यात् ॥ ४५५ ॥

चित्तैकाग्र्योपपत्त्यै विदधति नियतिं देशकालासनादेस्सच्छिद्रं त्वन्यदाऽपि क्षममिति सततं चिन्तनं संस्मरन्ति ।
प्रत्यक्संस्कारभूम्ना परनिहितधियस्तादधीन्यादिबुद्ध्या जुष्टं व्यासक्तनीत्या भवति हि समये योगिनः कर्म सर्वम् ॥

कर्मोपास्त्यङ्गभूतं यदिह नियमितं तत्परे पूर्वपादे योगेन ब्रह्मदृष्टिर्यदपि च परमो धर्म इत्युक्तमाप्तैः ।
तेन प्राधान्यसिद्धावितरदनुगुणं तस्य योज्यं तथा च प्रायः प्रक्रान्तयोगी पटिमलघुतया कल्पितः कालयोगः ॥ ४५७ ॥

विद्याङ्गं पूर्वमुक्तं किमिह पुनरसावासनाद्यङ्गचिन्ता दृष्टार्थांशं विभज्य प्रथयितुमपि न प्राक्शमाद्यङ्गवादात् ।
सत्यं ध्यानाख्यधारावहनमतिदशा त्वन्वहं साधनीया चित्तैकाग्र्येण सर्वप्रयतनविरहे स्यादितीदं प्रकाश्यम् ॥ ४५८ ॥

( अथ आप्रयाणाधिकरणम् ॥ ६ ॥ ) सू०—आप्रयाणात्तत्रापि हि दृष्टम् ॥ ४. १. १२. ॥

एकस्मिन्नेव घस्ने यदि भवति परध्यानरूपा तु भक्तिस्तद्विश्रान्तो विधिस्स्यादुपरि तु विफला ब्रह्मचिन्तेत्ययुक्तम् ।
छान्दोग्ये यावदायुस्सुचरितमुदितं ब्रह्मलोकाप्तिहेतोस्तद्धि ध्यानस्य वृद्ध्यै तदपि च विहितं कुत्रचित् प्रायणान्तम् ॥

( अथ तदधिगमाधिकरणम् ॥ ७ ॥ ) सू०—तदधिगम........तद्व्यपदेशात् ॥ ४. १. १३. ॥

नाभुक्तं कल्पवृन्दैरपि सुपरिहरं कर्म गीतं मुनीन्द्रैः पापाश्लेषप्रणाशश्रुतिरपि परविद्वैभवोक्तिस्ततस्स्यात् ।
मैवं नाभुक्तमित्याद्यपि फलजनने कर्मणो दार्ढ्यमाह प्रायश्चित्तक्रमेण त्विह परभजनं चोदितं कर्मशान्त्यै ॥ ४६० ॥
निष्कृत्यात्मत्वमस्योदितदुरितसमुन्मूलनस्योपपन्नं नात्र स्वर्गादिनीतिः प्रतिहतिविगमे धीविकासस्स्वतो हि ।
पापालेपः प्रमादोदितसहनमिति स्थाप्यमाज्ञानुवृत्त्यै नो चेन्न स्यात् गतिर्नाविरत इति गिरो योगिनां च प्रवृत्तेः ॥
अश्लेषः कर्मशक्तेरनुदय उदये तन्निवृत्तिर्विनाशश्शक्तिस्सा च प्रणेतुस्तदुचितफलकृन्निग्रहानुग्रहात्मा ।
प्रायश्चित्तं निमित्ते कथमनुदित इत्यत्र नैवानुयोज्यं नाधर्मस्तस्य तन् स्यादिति खलु हृदयं ग्राह्यमश्लेषवाचः ॥ ४६२ ॥
धीपूर्वं तूत्तराघं न सृजति परवित् सर्वदा सावधानो जातं नैमित्तिकैश्च क्षिपति समुचितैराशु भुञ्जीत वा तत् ।
वृत्रादौ दृष्टमेतन्नियतिविभवतश्चेदिराजादिसिद्धिर्युक्ताऽथैवान्यदा वा मुनिरिह मनुते ब्रह्मनिष्ठस्य मुक्तिम् ॥ ४६३ ॥

( अथ इतराधिकरणम् ॥ ८ ॥ ) सू०—इतरस्याप्येवमसंश्लेषः पाते तु ॥ ४. १. १४. ॥

धर्मस्याश्लेषनाशौ न हि परभजनानुग्रहेणोपपन्नौ तस्याघत्वप्रसङ्गाच्छ्रुतिरिह च परं पापनिर्मुक्तिमाह ।
भोगैस्स्यात् पुण्यनाशोऽस्त्विति यदि न यतः काम्यमप्यस्य पापं तस्मिंस्तल्लक्ष्मसिद्धेर्न सुकृतमिति च श्रूयते पापताऽस्य ॥
पुण्यं विद्यानुकूलं यदिह सफलता तस्य विद्याप्रदत्वात् तस्यां यत्नोपयुक्तं तदपि दुरितवद्बन्धकत्वेन वार्यम् ।
कारागारोपरुद्धे निगलयुगलतस्सार्वभौमस्य भृत्ये हैमं कार्ष्णायसं च प्रसदनसमये भञ्जनीयं सहैव ॥ ४६५ ॥
काम्यं नेच्छेद्विरक्तो यदि किल कुरुते रागयोगात् फलेत्तन् नाधीपूर्वं च काम्यं किमपि न च दिशेद्बन्धमज्ञातधर्मः ।
विद्यार्थैर्लिप्यतेऽतः किमितरदिति चेन्नाधिकैस्सान्तरायैरन्यार्थैर्मोहजैः क्वाप्यनुतपनवतो बन्धुजैश्चास्त्वलेपः ॥ ४६६ ॥

( अथ अनारब्धकार्याधिकरणम् ॥ ९ ॥ ) सू०—अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ ४. १. १५. ॥

नश्यत्वारब्धकार्यं परविदि दुरितं न ह्यधीतो विशेषस्सर्वे पाप्मान इत्यप्यभिहितमिति चेन्नोपलम्भादिबाधात् ।
सद्विद्या तस्य तावच्चिरमिति च वदत्यस्मरंश्चागमज्ञा जीवन्मुक्त्यादिशब्दोऽप्युपचरणपरो मोहितास्तेन मन्दाः ॥ ४६७ ॥
रोगाद्यारम्भकाणां प्रशमनविधयस्सन्ति दानार्चनाद्याः प्रत्येतुस्स्वावताराद्यपि विभुरपुनर्जन्मतामप्यगायत् ।
तस्मादारब्धकार्ये फलनियतिवचो दुर्घटं भाति मैवं प्रायश्चित्तोज्झितानां ननु फलनियतिस्सूत्रकाराद्यभीष्टा ॥ ४६८ ॥

( अथ अग्निहोत्राद्यधिकरणम् ॥ १० ॥ ) सू०—अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ ४. १. १६. ॥

श्लेषश्चेदस्य पुण्यैस्स तु भवति तदा बन्ध इत्यभ्युपेत्यं यद्यश्लेषो भवेत्तैः परविदि विफला पुण्यनिष्ठा परस्तात् ।

तस्माद्धर्मोऽप्यधर्मक्रमत इह परित्याज्य एवेत्ययुक्तं न स्याद्बन्धाय विद्याङ्कुरमुपचिनुते ह्यग्निहोत्रादिधर्मः ॥ ४६९ ॥
सर्वापेक्षेत्यवोचन्ननु परभजने कर्मणामङ्गभावं भूयो वक्त्यग्निहोत्रेत्यपि तदिति मुधा ह्येकमत्रेति चेन्न ।
विद्याया नैरपेक्ष्यात्तदपरिकरता शङ्किता प्रागपास्ता श्लेषाभावप्रसक्ता त्विह पुनरिति तन्नीतिवैषम्यसिद्धेः ॥ ४७० ॥

(अथ इतरक्षपणाधिकरणम् ॥ ११ ॥) सू०—भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते ॥ ४. १. १९. ॥

निर्दिष्टाऽस्माच्छरीरादिति नियतिरतो यावदित्यादिशब्दः कर्मप्रारब्धकार्यं कथयतु विदुषस्तच्छरीरान्तमेव ।
मैवं प्रारब्धचैत्र्यान्न तदवधिविधौ व्याप्रियेतान्यपर्यात् भूयो देहस्मृतेश्चान्तिमवपुषि दृढोद्यत्समाधेस्तु मोक्षः ॥ ४७१ ॥
नन्वत्रास्मादितीदं वितथमिह पदं स्याच्छरीरे न तु स्यात् कारागारोपमत्वप्रथनपरतया तस्य साफल्यसिद्धेः ।
त्याज्यत्वव्यक्तये हि प्रभुरसुखमिमं लोकमित्यप्यगायत् भूतावासं विशिपन्निममिति च मनुर्हेयभावं व्यनक्ति ॥ ४७२ ॥
सर्वे जीवास्समानास्त्वत इह विविधं कर्म चानादि तुल्यं वैषम्यादिश्च दोषो न भवति भगवत्यन्यथा शास्त्रभङ्गः ।
मुक्तौ नातो विलम्बप्रभृति घटत इत्यल्पसारोऽनुयोगश्चित्रे कर्मप्रवाहे फलसमयभिदा ह्याश्रिता सर्वतन्त्रैः ॥ ४७३ ॥
आवृत्ता ब्रह्मविद्या त्वसकृदहमिति स्याच्च न स्यात् प्रतीके कर्माङ्गेऽर्कादिदृष्टिः प्रणिधिरपि भवेत् सासनः प्रत्यहं च ।
पापे पुण्ये च नाशादिकमथ तु तयोर्भोग्यताऽऽरब्धकार्ये कार्यत्वं स्वार्हवृत्तेरिति कथितमिहारब्धशान्तौ च मोक्षः ॥

॥ इति चतुर्थाध्यायस्य प्रथमः पादः ॥ १ ॥ अथ चतुर्थाध्यायस्य द्वितीयः पादः ॥ २ ॥

नित्यत्वज्ञत्वपूर्वं निपुणमभिहितं जीवतत्त्वं द्वितीये जागर्यादौ च खेदो जगदटविमहाजाङ्गिकस्याथ गीतः ।
विद्यारम्भावसानावधि यदपि परध्यातुरर्थ्यं तदुक्तं प्रारब्धस्यावसाने वपुरिह जहतो गत्युपक्रान्तिमाह ॥ ४७५ ॥
वर्ण्यो वैराग्यपादे तनुकरणगणक्षोभ ईदृक्तथाऽपि ब्रह्मज्ञस्यापि काले भवति मृतिरिति ज्ञप्तयेऽत्रानुबन्धः ।
तस्योत्क्रान्तौ विशेषं कथयितुमुचिता चात्र साधारणोक्तिर्मध्ये विद्याफलानां मरणमपि वदंस्तत्प्रियं चिन्त्यमाह ॥ ४७६ ॥
वृत्तिर्वागादिकं वा क्वचन भजतु सम्पत्तिमन्यक्रमां वा श्रुत्यैवोक्तक्रमां वा न हि फलमिह तच्चिन्तनस्येति चेन्न ।
सम्पत्त्याद्यानमीदृक्क्रमनियतियुतं युज्यते न ह्यपार्थं तस्मात्तच्चिन्तनं काप्युपकुरुत इति स्थाप्यते तद्यथार्हम् ॥ ४७७ ॥
जीवं ये नित्यमुक्तं निजगदुरथवा जीवतो मुक्तिमाहुस्तत्तज्जल्पोपजापप्रचलितनिगमग्रामसंक्षोभशान्त्यै ।
उक्त्वा प्रारब्धकार्यं विदुषि च फलवत् प्रायणं चात्र तुल्यं नाडीभेदप्रवेशप्रभृति समधिकं वक्ष्यति ब्रह्मगत्यै ॥ ४७८ ॥
आयुस्सीमामनिष्टैरिह बहुभिरसावात्मनः प्रेक्ष्य योगी यत्कुर्याद्यच्च पुत्रप्रभृतिषु न हि तत् तर्क्यमत्रेत्यनुक्तिः ।
गीतादिष्वन्त्यकाले यदगणि तदपि प्राच्ययोगप्रकारे तत्तत्प्राप्यानुरूपे नियतमिति यथापूर्वधीरत्र भाव्या ॥ ४७९ ॥

(अथ वागधिकरणम् ॥ १ ॥) सू०—वाङ्मनसि दर्शनाच्छब्दाच्च ॥ ४. २. १. ॥

कर्मज्ञानाक्षवर्गो मनसि न विलयं यात्यतत्सम्भवत्वात्तद्वृत्तेस्तादधीन्यात्तदुपरतिमिह प्राह सम्पत्तिशब्दः ।
इत्येतन्नोपपन्नं तदुभयविलये चोद्यनिस्तारसाम्यात्संपत्तिः श्लेषमात्रं करणविषयवाक्च्छब्दमुख्यत्वसिद्ध्यै ॥ ४८० ॥

(अथ मनोधिकरणम् ॥ २ ॥) सू०—तन्मनः प्राण उत्तरात् ॥ ४. २. ३. ॥

अन्नस्योक्तं विकारो मन इति मनसः प्राणसम्पत्तिवाक्ये प्राणस्याम्भोमयत्वात् प्रकृतिविकृतितासम्भवात्तल्लयोऽस्तु ।

मैवं तत्तन्मयत्वश्रुतिरभिमनुते तत्तदाप्यायनं तैः प्राग्वत् संश्लेषमात्रं तत इह हि मनः प्राण इत्यामनन्ति ॥ ४८१ ॥

(अथ अध्यक्षाधिकरणम् ॥ ३ ॥) सू०—सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४. २. ४. ॥

प्राणस्यैकादशाक्षस्तदनु निविशते तेजसीत्थं श्रुतत्वान्मध्येऽन्यप्राप्तिक्लृप्तौ श्रुतिहतिरिति चेन्नात्मयोगस्य चोक्तेः ।
प्राणस्य स्वाप्तजीवे मिलति निजतनोरुद्धृतैर्भूतसूक्ष्मैस्तेजःप्राप्तिश्च गङ्गानिपतितयमुनासागरप्राप्तिवत् स्यात् ॥ ४८२ ॥

(अथ भूताधिकरणम् ॥ ४ ॥) सू०—भूतेषु तच्छ्रुतेः ॥ ४. २. ५. ॥

तेजस्येवास्तु युक्तः श्रिततनुभृदनस्तेजसीत्याद्यबाधाच्छत्रिन्यायोऽपि नास्मिन्निति यदि न तथाऽन्यत्र भूतान्तरोक्तेः ।
विश्वारम्भाय देवस्त्रिवृतमकृत च प्रागिमं भूतवर्गं प्राचुर्यात्तत्तदेकव्यवहृतिरिति चासूत्रयत्पूर्वमेव ॥ ४८३ ॥

(अथ आसृत्युपक्रमाधिकरणम् ॥ ५ ॥) सू०—समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ४. २. ७. ॥

अत्रैव ब्रह्म विन्दत्यमृत इह भवत्यागमाद्ब्रह्मनिष्ठो नोत्क्रान्तिस्तस्य युक्तेत्यसदुपनिषदो ह्यस्य गत्याद्युशन्ति ।
नान्यप्राप्त्यर्थमेतत् सगुणसमधिके कुत्रचिन्मानहानेस्तस्मादत्रामृतत्वप्रभृतिवचनतस्तादृशी तद्दशोक्ता ॥ ४८४ ॥
निश्शेषं भोगहेतौ गलति परविदः कर्मणि प्रायणेऽथो गत्यर्थं सूक्ष्मदेहानुगतिरणुतया निश्चितस्याफला स्यात् ।
मार्गे संवादवादस्तदुचितवपुषा त्वस्त्विवीवानुयोगे कृत्स्नाविद्यानिवृत्तिः परपदगमनापेक्षिणीत्यादि वाच्यम् ॥ ४८५ ॥
कल्पादौ भूतसूक्ष्मप्रभृतिभिरुदितं वर्ष्म कल्पान्तनाश्यं प्रत्येकं प्राणिभेदे नियतमनियतस्थूलदेहानुयायि ।
लिङ्गाख्यं भस्त्रिकान्तःपरुवकवदवस्थायि साङ्ख्यैः प्रतीतं सूक्ष्मांशः पूर्वमूर्तेरुपरितनतनोर्बीजमत्रेष्यते तत् ॥ ४८६ ॥
तत्त्वज्ञानेन बन्धः किल गलति पुरा नोत्क्रमेणेत्यसारं माता वन्ध्येतिवद्धि स्ववचनविहतिर्जीवतो मुक्तिवादे ।
मुक्तश्चेत्तत्त्वबोधात्तनुभृदिह तदा तत्परं नैष दुःख्येत् मिथ्या दुःखं तदा चेत् कथय तव कदा तस्य सत्यत्वमिष्टम् ॥
यंयं भावं स्मरन्तो जहति वपुरिदं देहिनो यान्ति तंतं तस्मादुत्क्रान्तिसाम्यं न घटत इति चेत्तन्न तन्मात्रसाम्यात् ।
विद्याभेदादिनीत्या भवति विषमता ह्यन्तिमप्रत्ययादौ किञ्चित् साधर्म्यवादे न च नियतिमनी सर्वथा साम्यसिद्धिः ॥

(अथ परसम्पत्त्यधिकरणम् ॥ ६ ॥) सू०—तानि परे तथा ह्याह ॥ ४. २. १४. ॥

जीवोत्क्रान्त्युक्तिकाले विदुषि तु घटते तत्प्रतिक्षेपभङ्गो भूतोत्क्रान्तेस्तु पश्चात्तदुपनिपतने सङ्गतिस्स्यात् कथञ्चित् ।
तस्मात् साधारणोऽपि ह्ययमुपरि ततस्स्थाप्यते हार्दयोगस्तुल्येऽप्यस्मिन्न तुल्यास्सरणिमुखतया प्राप्यभेदेन नाड्यः ॥
प्राप्तुं भोगापवर्गौ प्रयति तनुभृति प्राप्तसूक्ष्मस्वदेहे सम्पत्त्या किं परस्यां श्रितहृदयमुषौ लभ्यते देवतायाम् ।
आतस्तेजः परस्यामिति चिरघटितेऽप्यस्तु सिद्धानुवादो मैवं मानानुसारात् फलमिति परमे सङ्क्रमश्श्रान्तिशान्त्यै ॥ ४९० ॥

(अथ अविभागाधिकरणम् ॥ ७ ॥) सू०—अविभागो वचनात् ॥ ४. २. १५. ॥

सम्पत्तिर्देवतायां भवतु लय इयं सा हि सर्वस्य योनिर्भूयस्स्रष्टुं क्षमा चेत्यसदनुषजतो वाच्यवैरूप्यदोषात् ।
विश्लेषो भूतसूक्ष्मैरिह न च घटते सृष्टिक्लृप्तिस्तु गुर्वी प्रोक्ता धूमादिमार्गे गतिरपि भविनस्तत्परिष्वङ्गनेन ॥ ४९१ ॥

(अथ तदोकोधिकरणम् ॥ ८ ॥) सू०—तदोकोऽग्रज्वलनं........हार्दानुगृहीतश्शताधिकया ॥ ४. २. १६. ॥

नाडीजालेऽतिसूक्ष्मे न भवति सुशका मुक्तिनाडी विवेक्तुं तस्मान्मूर्धन्यनाडीगतिरनियमतो मुच्यमानस्य पुंसः ।

वाक्यं गन्तुस्तयोर्ध्वं प्रवददमृततां सम्भवादस्तु मैवं विद्यासंप्रीतहार्दप्रसदनमहसा स्वार्हनाडीप्रवेशात् ॥ ४९२ ॥

स्वाधीनो हार्दसंज्ञस्स्वयमविकलया संपदा साकमेकः स्थित्वा हृत्पद्ममध्ये स्थगितनिजतनुस्सप्तलोकीगृहस्थः ।
नाडीचक्रे सुषुम्नां निखिलधृतिकरीं नाभिमूर्धान्तरूपां भित्त्वा तन्मध्यरन्ध्रप्रहितमिषुमिवोत्क्षिप्य नेता मुमुक्षुम् ॥

(अथ रश्म्यनुसाराधिकरणम् ॥ ९ ॥) सू०—रश्म्यनुसारी ॥ ४. २. १७. ॥

एतैरेवेति वाक्ये दिनकरकिरणालम्बनेनोर्ध्वयानं यत्प्रोक्तं योगिनस्तद्दिनमृतिनियतं निश्चयुक्त्येति चेन्न ।
अह्नि च्छायासु रात्रिष्वपि च लघुतरा रश्मयस्सन्ति लिङ्गैस्तापो वर्षादिरात्रौ न यदि हिमदिनन्यायतो नेयमेतत् ॥

(अथ निशाधिकरणम् ॥ १० ॥) सू०—निशि नेति........यावद्देहभावित्वाद्दर्शयति च ॥ ४. २. १८. ॥

सर्वेषामप्रशस्तं रजनि मरणमित्यह्नि योगी म्रियेत प्रेयाद्यद्येष रात्रौ न चरममरणं तद्भवेदित्ययुक्तम् ।
कर्म प्रारब्धकार्यं ह्यनियतसमयं क्षीयते तावदेवेत्युक्तश्चास्मिन्विलम्बोऽहनि निशि च परं विद्यया सोऽश्नुतेऽतः ॥

यत्रैकस्यापवर्गः प्रतिनियततया गण्यते जातकज्ञैः तत्स्यादन्त्यं शरीरं नतु भवति ततोऽप्यन्ययोगव्युदासः ।
न ह्यत्राप्यन्तकाले दिनरजनिभिदा देशभेदादि चैवं शव्यं कुर्वन्ति तस्मिन् यदुच यदुच नेत्यादि चैवं विभाव्यम् ॥

(अथ दक्षिणायनाधिकरणम् ॥ ११ ॥) सू०—अतश्चायनेऽपि दक्षिणे ॥ ४. २. १९. ॥

देहं योगीश्वरोऽपि त्यजति यदि रवेर्दक्षिणावृत्तिकाले विन्देत्सायुज्यमिन्दोरिह भवति पुनस्तच्छ्रुतेस्तत्स्मृतेश्च ।
मैवं पूर्वोक्तनीतिस्त्विह नहि विहता तस्य सायुज्यमिन्दौ विश्रान्त्यै सूर्यनीत्या जगदुपकृतये भीष्मकालप्रतीक्षा ॥ ४९७ ॥

किञ्च प्रारब्धकर्मप्रतिनियतमिदं जाह्नवीसम्भवस्य स्वेच्छा येनैवमासीत् स च वसुरभवन्नैष साक्षाद्विमुक्तः ।
तस्माद्विन्देत मुक्तिं नरपितृदिविषद्रात्रिकालेऽपि योगी स्यातां प्राशस्त्यनिन्दे तदितरविषये गीतयोक्तौ तु मार्गौ ॥ ४९८ ॥

सम्पद्येतान्यदक्षं मनसि तदपि तत्संयुतं प्राणवायौ सोऽध्यक्षे तैस्समेतस्स च तदखिलवान् भूतवर्गे तु सूक्ष्मे ।
उत्क्रान्तिस्स्यात् समाना युतिरथ च परे सा च संश्लेषमात्रं निर्गच्छेद्ब्रह्मनाड्या घृणिभिरथ निशादेवरात्र्योश्च मोक्षी ॥

॥ इति चतुर्थाध्यायस्य द्वितीयः पादः ॥ २ ॥ अथ चतुर्थाध्यायस्य तृतीयः पादः ॥ ३ ॥

निर्गत्य ब्रह्मरन्ध्रात् तपनकरमथालम्ब्य नाडीनिबद्धं प्रत्युद्यद्देवबृन्दप्रहितबलिरसौ येन योगी प्रयाति ।
मौकुन्दस्स्थाप्यतेऽसौ परमिह मुनिना पञ्चभिर्नीतिभेदैर्मोहाकूपारपारं पुरमभिगमयन्मुक्तिघण्टापथो नः ॥ ५०० ॥

(अथ अर्चिराद्यधिकरणम् ॥ १ ॥) सू०—अर्चिरादिना तत्प्रथितेः ॥ ४. ३. १. ॥

शाखाभेदेषु भिन्नां गतिमुपनिषदोऽधीयते तन्मुमुक्षोर्विद्यावैषम्यनीत्या स्मृतिरपि विषमा न व्यवस्थाऽर्चिरादेः ।
नैतत् सर्वत्र तैस्तैरिह तदिदमिति प्रत्यभिज्ञानसिद्धौ भाव्यं न्यूनाधिकत्वप्रभृति निखिलमप्यत्र सिद्धाविरुद्धम् ॥ ५०१ ॥

चैद्यादीनामयोध्यास्थिरचरजनुषां पुण्डरीकादिकानां भीष्मादीनामुपास्तिक्रमभवविभवव्यूहलोकस्थितानाम् ।
धातॄणां तत्सुतानामधिकृतिविगमे ब्रह्म संप्राप्स्यतामप्यन्येषां प्रस्थितिस्सा शितपृथुमतिभिश्चिन्तनीया यथार्हम् ॥ ५०२ ॥

(अथ वाय्वधिकरणम् ॥ २ ॥) सू०—वायुमब्दादविशेषविशेषाभ्याम् ॥ ४. ३. २. ॥

संप्राप्तौ देवलोको मरुदपि च समं वत्सरादित्यमध्ये नैकत्वं रूढिभेदात्तत इह तु तयोस्तुल्यभावाद्विकल्पः ।

मैवं योऽयं प्रसिद्धः पवत इति मरुद्देवतानां गृहत्वं तस्योक्तं धारकत्वादत उचितमिदं निर्विकल्पं तदैक्यम् ॥ ५०३ ॥

(अथ वरुणाधिकरणम् ॥ ३ ॥) सू०—तटितोऽधि वरुणस्संबन्धात् ॥ ४. ३. ३. ॥

कौषीतक्यागमोक्तौ वरुणशतमखौ सोऽपि नाथः प्रजानां क्वापि स्थाप्या निपीड्य श्रुतिमपि विफला ह्यन्यथा तच्छ्रुतिस्स्यात् ।
तस्मात्ते वायुलोकात् परमनुपठनात् तत्र सन्त्वित्ययुक्तं स्यादर्थाद्विद्युतोऽन्वग्वरुण इति परौ पाठतस्तत्परौ स्तः ॥ ५०४ ॥

यत्त्वस्यामानवस्य श्रुतमिह परसंप्रापकत्वं भवेत्तत् सद्द्वारत्वेऽप्यबाधं तदपि सहकृतौ तैश्श्रुतौचित्यभूमा ।
यश्चोक्तो मानसाख्यस्तटित उपरि तु ब्रह्मलोकाप्तिहेतुस्तस्मान्नेता स नान्यो विदुरतिवहनं वैद्युतेनैव तस्मात् ॥ ५०५ ॥

(अथ आतिवाहिकाधिकरणम् ॥ ४ ॥) आतिवाहिकास्तल्लिङ्गात् ॥ ४. ३. ४. ॥

भोगस्थानान्यमूनि ज्वलनदिनमुखान्यध्वचिह्नानि वा स्युर्लोकोक्तिच्छाययैवं स्थितमिदमिति नासंभवात् कालशब्दे ।
स्पष्टे नेतृत्वपुंस्त्वे क्वचिदतिवहनं तद्वदन्यैश्च कार्यं सन्दिग्धे वाक्यशेषाद्गतिरिति जगुरन्यादिवाचाऽभिमन्तॄन् ॥ ५०६ ॥

यां श्रुत्वा धर्मसूनुर्न्यपतदभिपतेत्तामसौ तामसौघो वर्गस्त्रैवर्गिकाणां पितृसरणिघटीयन्त्रचक्रे विघूर्णेत् ।
वर्तन्येषाऽर्चिरादिश्श्रुतिभिरपुनरावर्तिनां संविभक्ता तत्र ब्रूतेऽतिवोढॄंस्तदितरवदहःपक्षमासादिशब्दः ॥ ५०७ ॥

पूर्वं धूमादिमार्गे सुकृतिषु कथिता चन्द्रमःप्राप्तिरन्या सायुज्यं न्यासविद्याप्रकरणपठितं चान्द्रमन्यादृगुक्तम् ।
अत्रान्यार्चिर्मुखानामतिवहनकृतामष्टमस्याप्तिरिन्दोरित्थं सुस्था व्यवस्था प्रणिहितहृदयैरेवमन्यच्च सूह्यम् ॥ ५०८ ॥

भूलोकेशाग्निपूर्वान् कतिचन भविनः केऽपि मन्यन्त एतान्च्छब्दैक्येऽप्यत्र गुर्वी भवति तदभिमन्त्रन्तराणां प्रक्लृप्तिः ।
अन्ये चामानवस्य स्वपदगतपरब्रह्मनेतृत्वदृष्ट्या नित्यत्वं तद्वदन्यान्निजगदुरखिलान्नित्यवैकुण्ठभृत्यान् ॥ ५०९ ॥

(अथ कार्याधिकरणम् ॥ ५ ॥) सू०—कार्यं बादरिरस्य गत्युपपत्तेः ॥ ४. ३. ६. ॥

वैधात्रस्थाननेतॄन् समकथयदिमान् बादरिस्तादृशानां गत्यौचित्यं तदा स्यान्न खलु विभुजुषामत्र वेद्यं न लभ्यम् ।
सामीप्याद्ब्रह्म चोक्तस्सरसिजवसतिस्तेन सार्धं च मुक्तिर्युक्तेत्येतन्न नानाश्रुतिपठितपरस्थानगत्याद्यबाधात् ॥ ५१० ॥

मार्गोऽसावर्चिरादिर्गमयति परमं धाम गत्यादियोगाद्ब्रह्मोक्तेर्मुख्यभावादिति तु निरणयज्जैमिनिस्सत्यमेतत् ।
वक्तव्यं त्वत्र किंचिन्नयति परविदस्स्वान्वितब्रह्मनिष्ठांस्तद्देहस्वात्मनिष्ठानपि मुखभिदयाऽमी च संपूर्णनिष्ठाः ॥ ५११ ॥

ध्यायेयुर्ये च जीवान् प्रकृतिशबलितान् केवलान्वा यथेष्टं द्वेधाऽपि ब्रह्मदृष्ट्या जडनिवहमपि स्वेन यद्वाऽन्यदृष्ट्या ।
ते सर्वेऽपि प्रतीकप्रणिहितमनसो नार्चिराद्यध्वयोग्या ब्रह्मोपास्तेश्च लिङ्गं गतिरियमनघा सूत्रिता पूर्वमेव ॥ ५१२ ॥

प्रत्यापत्तिप्रकारः प्रतिनियतिमती कर्मयोगादिनिष्ठा विद्याभेदाधिकारः परभजनबलान्मुक्तिविघ्नोपशान्तिः ।
अन्त्यावस्थाव्यवस्था पृथगयनगतौ विश्रमाप्तिर्विभक्ता साक्षान्मुक्तिः क्रमाद्वेत्यखिलमगतिकैरप्रणोद्यं परैश्च ॥ ५१३ ॥

पन्थानं देवयानं तमिममधिगतः पश्चिमे देहपाते तत्त्वस्तोमांस्तमोन्तानतिपतति तरत्यापगां तत्र दिव्याम् ।
दिव्यं देहादि लब्ध्वा जनिलयरहितं याति विष्णोः पदं तत्-पर्यङ्कारोहणान्तां भजति बहुमतिं ब्रह्मसंवादधन्यः ॥५१४।

सङ्घाते नित्यता न क्वचिदपि न पृथिव्यादिभावस्तथात्वे पर्यङ्काद्यैर्न साध्यं किमपि भगवतः पूर्णनिस्सीमशक्तेः ।
व्यस्तप्रासव्यर्थमूर्ध्वे गतिरपि विफलेत्यादिकान् हैतुकानां क्ष्वोदिष्ठक्षीबजल्पाञ् श्रुतिरुपशमयेदद्भुतार्था स्वतन्त्रा ॥ ५१५ ।

भावोऽभावश्च यत्रानुपधि समुदितौ तत्र भावी विरोधः प्रज्ञातव्याप्तिरोधेऽप्यधिकनिजबलान्मानतस्स्वार्थसिद्धिः ।
दृष्टं सर्वेष्टमेतन्न यदि न हि भवेन्मानमध्यक्षतोऽन्यत् बाधोऽध्यक्षे मिथो वा वटदलशयनाद्यद्भुतं चैवमूह्यम् ॥ ५१६ ॥
एकत्वं ब्रह्मविद्यापरिषदि सुपथोऽधीयमानस्य तस्मिन्वायौ स्याद्देवलोकश्रुतिरपि वरुणाद्यन्वयो विद्युतोऽधि ।
नेतारोऽमानवान्ताः परपदगमने तद्विदां सोऽयमध्वा तुर्याध्यायस्य पादे सृतिरधिकरणैरित्थमुक्ता तृतीये ॥ ५१७ ॥

॥ इति चतुर्थाध्यायस्य तृतीयः पादः ॥ ३ ॥ अथ चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥

उक्तं पादैरघानामिति पृथुवपुषस्सूक्ष्ममूर्तेश्च हानं निर्द्धूतोपाधिराशेर्निरुपधिकमहानन्दमन्त्येन वक्ति ।
स्वाविर्भावोऽत्र चिन्त्यस्त्रिभिरधिकरणैश्छन्दवृत्तिस्त्रिभिश्चेत्येवं द्वे पेटिके स्तस्स्वत उभयमिदं नोपधेरीशनिघ्नम् ॥ ५१८ ॥

( अथ सम्पद्याविर्भावाधिकरणम् ॥ १ ॥ ) सू०—सम्पद्याविर्भावस्स्वेन शब्दात् ॥ ४. ४. १. ॥

अश्रान्तस्वप्रकाशं यदिदमहमिति प्रत्यगात्मस्वरूपं तस्याविर्भावसिद्धौ न तु किमपि फलं स्यात् सुषुप्ताविशेषात् ।
तस्मान्मुक्तस्स्वमन्यद्व्रजति वपुरसौ देववद्रूपशब्दान्मैवं स्वेनेति शब्दो ह्यफल इह भवेद्रूपवाचाऽर्थसिद्धेः ॥ ५१९ ॥
नित्यस्वात्मस्वरूपस्थितिरियमभिनिष्पत्तिरित्यूचिवांसस्तन्मात्रं स्यान्न विद्याफलमिति न विदुर्नित्यसिद्धं क्व साध्यम् ।
सिद्धं साध्यानुवेधाद्भवति फलमतस्सा त्वविद्याविभङ्गो यद्वा सिद्धस्य वित्तिस्तदिह न वितथं मुक्त इत्यादिसूत्रम् ॥ ५२० ॥
स्वाकारान्नित्यभातादधिकसुखतया भाति जीवस्तदानीं सिद्धाविर्भावमात्रेऽप्यनुविदुरभिनिष्पत्तिवाचः प्रयोगम् ।
सङ्कोचात्यन्तहानिर्धिय इयमभिनिष्पत्तिरागन्तुरुक्ता निष्प्रत्यूहं स्वरूपोपधिकमपि तदा स्वेनशब्दः प्रवक्ति ॥ ५२१ ॥
प्रायस्स्वस्मिन्स्वदेहिन्यनघगुणनिधौ तद्विभूतिद्वये वा दृष्टं यत्स्यात् समाधौ भवति पृषतवत्तद्धि मुक्तानुभूतेः ।
कृत्स्नं तच्छर्करौघव्यतिकरितसुधासिन्धुवत् स्वादुभूतं तस्मात् स्वात्मप्रकाशे न फलमिति वदन् कूपकूर्मो घृणार्हः ॥
मल्ली शुद्धं प्रसूनं जनयति समये रज्ञकोपाधिमुक्ते तद्वन्नाथानुकम्पा फलमुपशमितावग्रहं सूरितुल्यम् ।
तस्मादागन्तुकेऽपि प्रतिहतिविरहात् तादृशे धीविकासे प्रत्यापन्नस्वदायक्रम इह कथितः प्राप्तसिद्धेः प्रतीचः ॥ ५२३ ॥
अर्वाञ्चो मुक्तिभेदं कतिचिदगणयन् स्वात्ममात्रानुभूतिं तत्र ब्रह्मानुभूतेर्विहतिरुपधितस्स्यात् स्वतो वेति चिन्त्यम् ।
सन्ति द्वेधाऽपि दोषास्तत उपचरणान्मुक्तिशब्दोऽत्र युक्तः सालोक्यादिप्रभेदेष्वपि सरणिरियं सावधानैर्विभाव्या ॥ ५२४ ॥

( अथ अविभागेन दृष्टत्वाधिकरणम् ॥ २ ॥ ) सू०—अविभागेन दृष्टत्वात् ॥ ४. ४. ४. ॥

जीवेशौ नित्यभिन्नौ श्रुतिरिह च सहेत्याह मुक्तस्य भोगं साम्ये पारम्यमुक्तं स्मृतमपि स पृथग्भातु तस्मात् परस्मात् ।
मैवं तत्त्वं हि मुक्तौ स्फुरति तदनघो भेदभानांश इष्टस्सिद्धे देहात्मभावे त्विह न हि घटते तत्त्वनिष्ठत्वबुद्धिः ॥
मन्त्रोक्तं भोक्तृभावे यदि सहभवनं ब्रह्म न स्यात् प्रधानं तस्मात्तद्भोग्यभावे भवतु तदुचितं ब्राह्मणव्याकृतेश्च ।
द्वेधाऽपि ब्रह्म तत्त्वात् पृथगितर इह स्यादितीदं च वार्तं सिद्धे भेदे स्वनिष्ठस्थितिपरिहरणं ह्यत्र सूत्रोपपाद्यम् ॥ ५२६ ॥
पारम्यं यच्च साम्ये श्रुतमिह न हि तत् सर्वथेत्यप्यधीतं ग्राव्णो हेम्नश्च यद्वत् समधरणधृतौ स्यात्तदुक्तिस्तथाऽत्र ।
एवं तद्देहभावे स्थितवति विविधाबाधिताम्नायभूम्ना ब्रह्मैवेत्यादिवाक्यं प्रथयति समतां तादृगित्यप्यधीतेः ॥ ५२७ ॥

( अथ ब्राह्माधिकरणम् ॥ ३ ॥ ) सू०—ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ४. ४. ५. ॥

ज्ञानत्वे किं फलं स्यादिति मिषतु गुणैस्तादृशं ब्रह्मसाम्यं किं तैरन्यैस्स्वरूपात्तदिह भवतु चिन्मात्ररूपप्रकाशः ।
इत्थं चात्रोक्तपक्षद्वयमुभयविधश्रुत्युपात्ताविरोधान्निर्धूयाथ द्विधाऽऽविर्भवनमघटयत् सिद्धतत्त्वप्रकाशात् ॥ ५२८ ॥
पर्यायौ नामपाठेष्वनुपरिपठितौ मुक्तिकैवल्यशब्दौ कैवल्यं चान्ययोगत्यजनमिति कथं धर्मिधर्मान्वयोऽस्य ।
मैवं ब्रह्मस्वरूपादपरमिह न खल्वस्ति किंचित् स्वनिष्ठं न द्रव्यं चागुणं स्यादधिकरणयुगं तन्निरातङ्कमेतत् ॥ ५२९ ॥

( अथ सङ्कल्पाधिकरणम् ॥ ४ ॥ ) सू०—सङ्कल्पादेव तच्छ्रुतेः ॥ ४. ४. ८. ॥

धात्रादेरप्यपेक्ष्यो ह्युपकरणगणस्सत्यसङ्कल्पवृत्तेर्मुक्तस्याप्येवमेवास्त्विति यदि वितथं तद्विकल्पासहत्वात् ।
इष्टा द्रव्याद्यपेक्षा सुकृततदितरापेक्षणं तत्र दुःस्थं न स्यादिच्छाविघातस्त्वनुपधिकतया देववाञ्छैकरस्यात् ॥ ५३० ॥
विश्वस्यैतस्य जन्मस्थितिलयरचना विश्वकर्तुर्यथा स्यादिच्छासन्तानभेदान्नियतिरिह तथा नित्यमुक्तक्रियाणाम् ।
तस्यानुच्छेदवृत्त्या प्रतिकलभिदुरास्ताश्च तादृक्प्रवाहास्तद्बुद्धेरापरोक्ष्यं त्वनिशमभिदुरं वर्तते ब्रह्मधीवत् ॥ ५३१ ॥
प्रत्यूहार्हाः प्रदेशप्रभृतिमुक्रतिनस्सत्यसङ्कल्पभावे मर्त्यारम्भस्पृहादौ तदितरविविधप्राणिसृष्ट्यादिदृष्टेः ।
तेनेच्छासन्ततीनां सकलविफलते पुण्यपापैरमीषां मुक्तस्योक्ता चिकीर्षा त्वविहतविषया तारतम्यं त्वदोषः ॥ ५३२ ॥
सूत्रे मुक्तोऽप्यनन्याधिपतिरभिहितस्तेन कस्तस्य शेषी श्रुत्यैवोक्तस्स्वराडित्यपि विहतिरतः प्राक्प्रतिष्ठापितानाम् ।
मैवं नाथेतरान्प्रत्यघविहित इह क्षिप्यते शेषभावो विश्वस्यात्मेश्वरो यः पतिरिति पठितस्तत्पतित्वं त्वबाध्यम् ॥ ५३३ ॥

( अथ अभावाधिकरणम् ॥ ५ ॥ ) सू०—अभावं बादरिराह ह्येवम् ॥ ४. ४. १०. ॥

मुक्तः प्रोक्तोऽशरीरः क्वचिदथ बहुधा सम्भवः क्वाप्यधीतो गानक्रीडादि चोक्तं तदनुगुणमतद्द्वन्द्वमार्षं निरस्यन् ।
स्वच्छन्दस्योभयं तत् क्षममिति वदति स्वं मतं सूत्रकारस्स्याच्चाकर्मोद्भवं तन्निखिलमपि परब्रह्मवत्तत्समस्य ॥ ५३४ ॥
मोक्षे पुण्याद्यभावात्तदुपधिकवपुर्वर्जितत्वं न दूष्यं तस्मिन्दुःखार्हदेहत्यजि च शुभवपुस्सत्त्वपक्षोऽप्यबाध्यः।
इत्थं सत्यत्र मुक्तस्थितिरिह मुनिना कीदृशी सूत्रिता स्यान्मैवं स्वच्छन्ददेहग्रहतदनियमस्थापनेऽत्राभिसन्धेः ॥ ५३५ ॥
नानादेहा यदि स्युर्युगपदधिगतब्रह्मसाम्यस्य पुंसस्तेषां व्याप्तस्वरूपान्वय उचित इति प्राक्तनाणुत्वहानम् ।
नैतद्धीव्याप्तिसिद्धेर्भवति च जगदावेशवाक्तन्निदाना सौभर्यादौ प्रक्लृप्तां गतिमपवदितुं न क्षमं ब्रह्मसाम्यम् ॥ ५३६ ॥
देहानां यौगपद्ये बहुषु कथमणुर्धारकोऽस्त्वेष मुक्तश्चैतन्यद्वारतश्चेत् सकलमपि तदा धारयेद्व्याप्तबोधः ।
मैवं मुक्तस्य शक्तिर्नियमितविषया त्विच्छया सर्वशक्तेः प्राक्ताद्दृग्योगशक्त्या बहुतनुभजने कर्मबन्धोऽप्यपेक्ष्यः॥ ५३७ ॥
शक्तिः क्षेत्रज्ञसंज्ञा मुनिभिरभिदधे वेष्टिता कर्मभिस्स्वैः पुंसोऽनंशापि बुद्धिर्बहुविधविकृतिस्वीकृतैवं स चास्तु ।
वालाग्रेत्यादिवाक्यात्तदयमणुरपि स्यादनन्तोऽपि मुक्तौ न स्याज्जैनादिभङ्गे परिहृतविकृतेरैकरूप्यानपायात् ॥ ५३८ ॥
जीवस्यैकैकशो हि त्यजनत उदितो वृक्षशाखासु शोषस्तस्मादद्वारकं स्यादपगतवरणे मुख्यमानन्त्यमस्मिन् ।
मैवं शाखासु भोगाश्रयनियतिकरोपाधिनाशः प्रहाणं क्षेत्रादिन्यायतोऽसावभिमतिविरहात् स्यादधीतो जहातिः ॥ ५३९ ॥
एकोऽनेकः परस्मात् पृथगपृथगपि स्वस्वरूपेण मुक्तस्स्वाभीष्टाशेषभोक्ता स्वयमिति पृथुकक्षीबवद्ये भ्रमन्ति ।
तेऽन्वीक्ष्य स्वोक्तिबाधं श्रुतिशतविहतिं तत्तदुक्त्यान्यपर्ये जैनावष्टम्भदृप्यन्मतिकलहमुचः सत्पथं संश्रयन्तु ॥ ५४० ॥

सर्वं सङ्कल्पमात्राल्लभत इति समाम्नायते सूत्रितं च स्वेच्छातो देहयोगाद्यनियतिकथनं स्यात्ततः पिष्टपेषः ।
तन्नान्योन्योपरुद्धश्रुतिगतिनियतिः कामतोऽनेकदेहस्वीकारप्रक्रियेत्याद्यनियतिकथने सूत्रकाराभिसन्धेः ॥ ५४१ ॥

(अथ जगद्व्यापारवर्जाधिकरणम् ॥ ६ ॥) सू०—जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ ४. ४. १७. ॥

यद्यप्युक्तो विमुक्तः परतनुरपृथक्सिद्ध इत्यत्र पूर्वं व्यापारांशे तथाऽपि श्रुतमिह परमं साम्यमक्षोभणीयम् ।
सङ्कल्पादेव सर्वोत्थितिरिरिति हि ततस्स्यादिति प्रत्यवस्थां कृन्तत्यन्त्येऽधिकारे कृतिमदितरयोस्स्थापयन् भोगसाम्यम् ॥

सायुज्यं भोगसाम्यं समगणि निपुणैश्शब्दशक्त्याद्यबाधात्तच्च व्यापारसाम्ये त्वसति न घटते स्वक्रियास्वादहानेः ।
तस्मान्मुक्तस्य सृष्टिप्रभृतिरपि जगद्व्यापृतिर्ब्रह्मतुल्या मैवं तल्लक्षणं सा कथमनुगमतस्तस्य चान्यस्य च स्यात् ॥ ५४३ ॥

कथ्यन्ते सृष्टिवाक्यैः क्वचिदपि न जगत्कारणत्वेन मुक्ताः प्राधीतः कामचारो भवतु न जगदारम्भकत्वं ततस्स्यात् ।
सर्वाकारोपभोग्येश्वरविषयधियः साम्यतो भोगसाम्यं युज्येतानन्दवल्ल्यामगणि च विभुनाऽऽनन्दमात्रे समत्वम् ॥ ५४४ ॥

निष्कामश्रोत्रियस्याप्यतिदिशति सुखं मानुषानन्दतुल्यं साऽऽनन्दान्वक्तुकामा शतगुणमधिकानाविरिञ्चं क्रमेण ।
तत्तद्भोगात्त्वदिष्टं कथमिदमवरं कष्टमिष्टं हि मुक्ते सत्यं तत् स्यान्मुकुन्दप्रियजनसदृशे ह्येकदेशानुवादः ॥ ५४५ ॥

आनन्दानन्त्यमाह श्रुतिरिह हि यतो वाच इत्यादिका स्याद्विश्रान्तिः श्रान्तिमात्रादिति च निगदितं यामुनाचार्यवर्यैः ।
न ह्यानन्दो मितस्स्याद्विधिशतवचनेऽप्यस्य यष्ट्या नभोवत्तच्चोक्तं भूभृदण्वोरुदधिपतितयोर्मज्जने को विशेषः ॥ ५४६ ॥

विश्वं मुक्तस्य देहो न खलु तदपृथक्सिद्ध्यभावोपलम्भान्नोपादानं ततोऽसौ कथयितुमुचितस्सर्वशक्तित्वहानेः ।
नात्माशक्यं चिकीर्षेत्तदितरविषये निर्विघाता तदिच्छा व्यापारे भिद्यमानेऽप्यविषमरसता दृश्यते क्वापि लोके ॥ ५४७ ॥

तत्तत्सेवाविशेषस्थिरपरिणमितस्सार्वभौमप्रसादस्सूते भृत्यस्य साम्यं स्वयमनभिमतस्वामिचिह्नैकवर्जम् ।
एवं देवं दयालुं शरणमुपगतैर्लभ्यतेऽनन्यलभ्या निर्धूतावृत्तिशङ्का निरुपधिकरसा सव्यवस्था त्ववस्था ॥ ५४८ ॥

अत्राहुस्सूत्रमन्त्यं पृथगधिकरणं केचिदाञ्जस्यलाभादस्त्यावर्ते निषेध्ये त्विममिति च पदं तेन शङ्कोत्थितेति ।
भाष्यादौ तन्न दृष्टं भवति च सुगमं पूर्वशेषत्वमस्य स्यादावृत्तिप्रसङ्गादपि निखिलजगन्निर्मितौ साम्यशङ्का ॥ ५४९ ॥

सर्गाद्यावर्तलीलारससहचरिते दण्डरासे नियुक्तं जीवं देवो विमुच्य क्रमत इह सयुग्भावधन्यं भुनक्ति ।
कर्मात्यन्तोपशान्तेरिह न च पुनरावर्तयत्येनमित्यप्याम्नाते कर्ममूलाक्षयफलकथनाद्युत्थशङ्कोपशान्तिः ॥ ५५० ॥

स्वाविर्भावोऽपवर्गे निरुपधिनियतस्वप्रकार्यन्तदृष्टिश्चिद्रूपस्यैव तद्वच्छ्रुतिमकुटमितैः स्वप्रकारैस्सहेक्षा ।
सङ्कल्पादेव सिद्धिस्तनुषु च नियमोन्मुक्तता ब्रह्मसाम्यप्राप्तौ तल्लक्षणांशोज्झनमिति चरमाध्यायतुर्याङ्घ्रिसारः ॥ ५५१ ॥

ध्यानादिं तत्प्रभावं करणभृत इतो देहकाराकुटीरान्निष्क्रान्तिं ब्रह्मनाड्या गतिमपि सुपथा स्वप्रकाशं च साध्यम् ।
इच्छातस्स्वेष्टसृष्टिं परममपि परब्रह्मणा भोगमात्रे साम्यं मायामतस्थः कथमिव घटयेदन्तिमाध्यायसाध्यम् ॥ ५५२ ॥

मानामानप्रभेदप्रभृतिविभजनादादिमे कर्मभागे नाना वा देवतेत्याद्यनुपरिपठनान्मध्यमे देवतांशे ।
भागेऽस्मिन् भेदधर्मप्रभृतिकथनतस्सौगतादेश्च भङ्गात् मीमांसायां त्रिकाण्ड्यां क्वचिदपि न मृषावादगन्धावकाशः ॥

तथ्यन्तोदन्वदन्तस्स्मृतिरियमुदिता देशिकैः कर्णधारैः मुक्त्यर्थज्ञानपारं गमयति विशदं त्वन्यदीक्ष्यं विमुक्तौ ।

कर्तव्ये कल्पकारैः क्वचिदभिदधिरे कृत्यसन्देहभेदास्तत्त्वेऽप्येवं क्वचित् स्यात् तदपि न वितथः स्वोपयुक्तांशबोधः ॥

श्रुत्यन्तैकान्ततर्कक्रमगरिमगतौ तूलवच्छैलवर्गस्तत्सिद्धब्रह्मबोधद्युमणिरुचितमस्तोमकल्पोऽन्यजल्पः ।
मोक्षोपायैकराज्ये तदितरविधयः किङ्करत्वं भजन्ते मुक्तानन्दामृतैकोदधिपृषतकणस्पर्धिनोऽन्ये पुमर्थाः ॥ ५५५ ॥

पारावर्यं विविच्य प्रथममवितथैरागमैस्तत्त्ववर्गे संसारे तीव्रभीतिः परसमधिगमे तीव्रनिष्पन्नरागः ।
कश्चिद्विद्याविशेषं सपरिकरमधिष्ठाय शान्तान्तरायस्संपद्य ब्रह्म भुङ्क्ते निरुपधिकमनावृत्तिरित्थं श्रुतार्थः ॥ ५५६ ॥

साऽसौ सासूयतत्तत्कुमतिमतसमुन्मूलनी मूलनीतिश्रेणी निश्रेणिकल्पा त्रियुगपथरथारोहसूतं सुवीत ।
सन्तस्सन्तापवर्गप्रशमनपटुना तत्त्वबोधेन सन्तं सन्तोषं ब्रह्मसूत्राधिकरणचरणाध्यायसारावलिर्वः ॥ ५५७ ॥

षट्पञ्चाशच्छतं चेत्यधिकरणगणैर्व्यक्तसीमाविभागे काण्डेऽस्मिन्नस्मदुक्तं कतिचिदनुविदुः क्षेपधन्यैः किमन्यैः ।
पश्यन्तो विश्वमेतत् त्रिगुणगुणनिकायन्त्रितस्वान्तनिघ्नं नाथे नस्साक्षिभूते न वयमिह मुधा कुर्महे नर्मलीलाम् ॥ ५५८ ॥

विश्वं द्रव्यादिभेदाद्विशदमभिहितं *तत्त्वमुक्ताकलापे* व्यूढं शारीरकस्य त्विह दृढघटितं रूपमापादचूडम् ।
तस्मादस्मच्छ्रुताब्धेरमृतमिव समुद्रान्तमश्रान्तबद्धश्रद्धैरन्योन्यहस्तप्रदमिदमुभयं धार्यमाचार्यवद्भिः ॥ ५५९ ॥

इत्थं शारीरकोक्ते पथि समुपनतास्स्रग्धराश्श्रद्दधानं पारे मायापयोधेः प्रहितमभिमुखैः सूरिभिश्शुद्धभावैः ।
ब्रह्मालङ्कारकल्पैर्बहुभिरुपनिषत्सूत्रतात्पर्यशिल्पैर्देवाहत्वाय दिव्याप्सरस इव परिष्कृत्य सम्भावयन्ति ॥ ५६० ॥

प्रज्ञाधम्मिल्लमल्लीपरिमलमिलितप्राज्ञसेवासमुद्यच्छुद्धालोकोज्ज्वलं मां श्रुतिपरिषदुपस्कारसौभाग्यवद्भिः ।
पद्यैरेतैस्स्वहृद्यैः प्रणवमहिमवत्पाञ्चजन्यक्रमेण स्वाध्मातं रङ्गनाथः स्वयमिति मुखरीकृत्य सम्मोदते स्म ॥५६१ ॥

पाराशर्यः प्रभूतादुपनिषदमृतोदन्वतस्सारभूतं निर्मथ्यादत्त सूत्रैरवितथनिगमाचार्यनामा मुनीन्द्रः ।
यत्तन्निष्कृष्टमित्थं यतिपतिहृदयारूढमारूढतार्क्ष्यस्तद्वक्ता वाजिवक्त्रः सह मम गुरुभिर्वादिहंसांबुवाहैः ॥ ५६२ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु

अधिकरणसारावल्यां चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥

॥ समाप्तः चतुर्थाध्यायः ॥

॥ अधिकरणसारावली समाप्ता ॥ १ ॥

॥ श्रीरस्तु ॥

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः।

श्रीमते हयग्रीवाय नमः। श्रीमते रामानुजाय नमः।

श्रीमते निगमान्तमहादेशिकाय नमः।

# ॥ श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रश्रीमद्वेदान्ताचार्यविरचिता

# ॥ शतदूषणी ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी। वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

## ॥ ब्रह्मशब्दवृत्त्यनुपपत्तिवादः प्रथमः ॥ १ ॥

समाहारस्साम्नां प्रतिपदमृचां धाम यजुषां लयः प्रत्यूहानां लहरिविततिर्बोधजलधेः।
कथादर्पक्षुभ्यत्कलिकथककोलाहलभवं हरत्वन्तर्ध्वान्तं हयवदनहेषाहलहलः ॥ १ ॥

इदंप्रथमसम्भवत्कुमतिजालकूलङ्कषा मृषामतविषानलज्वलितजीवजीवातवः।
क्षरन्त्यमृतमक्षरं यतिपुरन्दरस्योक्तयश्चिरन्तनसरस्वतीचिकुरबन्धसैरन्ध्रिकाः ॥ २ ॥

प्राचीमुपेत्य पदवीं यतिराजदृष्टां तत्सन्निकृष्टमपि वा मतमाश्रयन्तः।
प्राज्ञा यथोदितमिदं शुकवत्पठन्तः प्रच्छन्नबौद्धविजये परितो यतध्वम् ॥ ३ ॥

वादाहवेषु निर्भेत्तुं वेदमार्गविदूषकान्। प्रयुज्यतां शरश्रेणी निशिता शतदूषणी ॥ ४ ॥

तत्र तावच्छास्त्रारम्भे—

विचारविषयत्वेन सूत्रकृद्यदसूत्रयत्। परोक्ता ब्रह्मशब्दस्य वृत्तिरत्र निरस्यते ॥

निर्विशेषब्रह्मवादे ब्रह्मशब्दस्य कचिन्मुख्यवृत्तत्वमस्ति न वा? न चेत्, असाधुत्वापत्तिः। साधुत्वस्य मिथ्यात्वमभ्युपगच्छतामसाधुत्वमिष्टमिति चेत्, हन्त तर्हि सर्वशब्दासाधुत्वम्। साध्वसाधुविवेकाभावे च कृतं साङ्गोपाङ्गैर्वेदैः। मुख्यार्थशून्यस्य तन्मूलवृत्त्यन्तरे लिङ्गत्वे चासम्भवति कथं कचिद्बोधकत्वमपि? नच साङ्केतिकोऽयमपभ्रंशो वा, येन वाचकत्वाभिमानाद्बोधकत्वं स्यात्। यस्यायमपभ्रंशश्शङ्क्येत, सोऽपि तथा वृत्तिविकल्पेन निर्धूयेत।

ननु ब्रह्मशब्दस्यायं महिमा—यन्मुख्यार्थविरहेऽपि नित्यं लक्षणया ब्रह्म बोधयतीति, तदिदं वन्ध्यायाः पौत्रदर्शनम्। मुख्यार्थसम्बन्धिन्यमुख्ये वृत्तिर्हि लक्षणा, तदभावेऽपि तद्वृत्तिं भवानेव भाषेत। किंचैवं मुख्यार्थशून्यास्सर्वे शब्दास्तंतमर्थं लक्षयन्तीति स्वीक्रियेत महामीमांसकेन। को हि त्वदुक्तन्यायवित्कुत्रापि शक्तिक्लृप्तिगौरवं मृष्येत्, मुख्यार्थशून्येन ब्रह्म लक्ष्यमिति वदता तदपि मुखान्तरेण संवृतिमुखे निक्षिप्तम्। अवाच्यवादाश्च वाच्यवादेन निरसिष्यन्ते। अस्ति चेत्किमन्यस्मिन्? विचारविषये वा? नाद्यः; निर्निमित्तत्वे पुनरसाधुत्वापातात्। यदृच्छाशब्दोऽपि हि स्वरूपनिमित्तकश्शास्त्रज्ञैश्शिक्षितः। नचायं सः; मानाभावात्, निरुक्तिविरोधाच्च। सनिमित्तत्वे च यः प्रकृत्यादिष्वस्य प्रयोगः, स ब्रह्मगुणलेशयोगादौपचारिक इत्यभाषि, अनुवृत्तस्याकृतिरूपस्य निमित्तस्यासिद्धेः, बृहत्त्वबृंहणत्वमात्रस्य बृहदादिशब्दवदतिप्रसङ्गित्वात्, अनेकशक्तिकल्पने गौरवात्, लोकोत्तरबृहत्त्वादिमात्रस्य तु भगवच्छब्दनयादुपचारद्वारत्वात्। अन्यथा गौणवृत्तिर्लुप्येत। * यत्साक्षादपरोक्षाद्ब्रह्मेति विशेषणं चान्यत्रामुख्यतां व्यनक्ति, * तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने इति च स्मर्यते। * द्वे ब्रह्मणी वेदितव्ये इत्यादिकमपि, * त्रीणि तेजांसि न स्पृशेत् इत्यादिवन्मुख्यामुख्यसमुच्चयाभिप्रायम्। न द्वितीयः; शुद्धोपहितविकल्पासहत्वात्; न हि निर्विशेषतयाऽभिमते शुद्धे * बृहति बृंहयतीति श्रुत्युक्तनिमित्तमस्ति। अधिष्ठानत्वेन सर्वविवर्तमूलतया च तत्स्यादिति चेन्न; तत्र तदुभयानभ्युपगमात्; अन्यथा मुक्तावपि तद्योगात् मुक्तेरेव मुक्तेः। उपलक्षणार्थं निर्वचनमिति चेन्न; विशेषणार्थत्वे बाधाभावात्, * तस्मादुच्यते परं ब्रह्मेति प्रवृत्तिनिमित्ततयैव बृहत्त्वादिश्रुतेः, * बृहत्त्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयत इति स्मृतेश्च; गोत्वाभिसम्बन्धाद्गौरितिवत्।

अस्तु व्यावहारिकं तद्वैशिष्ट्यम्; कथं तर्हि शुद्धे वृत्तिः? तदपि तद्द्वारा गम्यत इति चेत्; तर्हि तन्न मुख्यम्। उपहितं मुख्यमिति पक्षस्तु श्रुतिसिद्धस्वाभाविकसार्वज्ञ्याद्युपहितत्वविवक्षायां स्वमतविरोधादपास्तः। स्वाभिमताज्ञानादिदोषोपहितत्वं त्वनाक्षमलैङ्गमश्रौतमस्मार्तमसौत्रं चेति स्थापयिष्यते। तत्र च शुद्धे परे ब्रह्मणि निर्दोषभव्यगुणविशिष्टविषयभगवच्छब्दमुख्यवृत्तिनिरुक्तिविरोधः, * परं ब्रह्म परं धाम पवित्रं परमं भवानिति स्तुत्यनुपपत्तिः, * पवित्रं परममित्यादिसमभिव्याहारवैघर्थ्यं च। निर्विशेषलक्षणायां तु स्तुतिर्न कथंचिदपि सम्भवति; गुण्यवच्छिन्नगुणाभिधानरूपत्वात्तस्या इति। पूर्वापरादिविसंवादाच्च न कुत्रापि निर्गुणसिद्धिः। अपिच अविद्यानिवृत्त्यर्थमिह ज्ञातव्यमुपहितं निरुपाधिकं वा; आद्ये तत्त्वावेदकतटस्थस्वरूपलक्षणादिभिरपि तद्ग्रहादविशिष्टब्रह्मणि वृत्त्यसिद्ध्याऽस्मदिष्टसिद्धिस्स्यात्। स्याच्चातत्त्वज्ञानादेव मोक्षसिद्धिः, तस्य मिथ्यात्वेनैव युष्माभिरङ्गीकारात्। द्वितीये तु अतद्व्युत्पन्नेन तदुक्त्ययोग एव। तल्लक्षितं तज्जिज्ञास्यते लक्ष्यते शोध्यते चेति चेत्; तत एव निर्विशेषलक्षकब्रह्मशब्दात् ज्ञातत्वलक्षितत्वशोधितत्वसिद्ध्या जिज्ञासाद्यनपेक्षा स्यात्। नच जिज्ञासादौ विधिः, अदृष्टार्थत्वाभावात्; येन पिष्टपेषणं सहेम। निरुपाधिके ब्रह्मशब्दवृत्तिमविदुषः प्रतिबोधनेन सर्वं सार्थमिति चेत्; किं मुख्यामुख्यां वा? पूर्वत्र प्रस्तुतव्याघातः, सर्वस्योपहितमुख्यवृत्तिविषयबोधनोपक्षीणत्वात्, अनुपहिते हि लक्षणामेव वदसि, अभिधानाङ्गीकारे वा किं सार्वज्ञ्यादिविशिष्टपरब्रह्माभिधानप्रद्वेषेण? उत्तरत्र * अधीहीत्यादिवैघर्थ्यम्; ब्रह्मशब्दस्य मुख्यार्थमधीहीत्युक्ते लक्ष्यार्थलक्षणोपदेशस्यासंगतेः। लक्ष्यार्थमधीहीति तु निरुत्थानम्, कारणाभावात्; मुख्यार्थबाधादिनिश्चयपूर्वकत्वादमुख्यवृत्तिविज्ञप्तेः तन्निश्चयस्य चात्र ततः प्रागसिद्धेः, तत्सिद्धौ वा निर्विशेषावगमे-किं प्रश्नेन प्रत्युक्त्या वा? मुख्यार्थबाधो निश्चितः,

